सम्पूर्णमृषिवाक्यं तु सूक्तमित्यभिधीयते ।
दृश्यन्ते देवता यस्मिन्नेकस्य(१) बहुषु द्वयोः ॥ १२ ॥
देवतार्षार्थच्छन्दोभ्यो(२)वैविध्यं तस्य जायते(३) ।
ऋषिसूक्तन्तु यावन्ति सूक्तान्येकस्य(४) वै स्तुतिः ॥ १४ ॥
देवतैका तु यावत्सु देवतायास्तदुच्यते(५) ।
यावदर्थसमाप्तिः स्यादर्थसूक्तं वदन्ति तत् ॥ १५ ॥
समानच्छन्दसो यास्तु(६) तच्छन्दःसूक्तमुच्यते ।
वैविध्यमेतत्सूक्तानामिह(७) विद्याद्यथातथम् ॥ १६ ॥
देवतानामधेयानि मन्त्रेषु त्रिविधानि तु ।
सूक्तभाञ्ज्यथ ऋग्भाञ्जि तथा नैपातिकानि तु ॥ १७ ॥
सूक्तभाञ्जि भजन्ते वै सूक्तान्यृग्भाञ्जि वै(८) ऋचः ।
मन्त्रेऽन्यदैवतेऽन्यानि(९) निगद्यन्ते प्रसङ्गतः(१०) ॥ १८ ॥

---

(१) त्रिषु तद्दृश्यते यास्मिन्नेतस्यामिति क॰ घ॰ । एकस्येत्यत्र एकस्मिन्निति घ॰ ।
(२) देवतार्षार्थच्छन्दसः इति ख॰ ।
(३) वैविध्यस्य प्रजायते इति ख॰ ग॰ ङ॰ ।
(४) ऋषिसूक्तानि तान्यत्र यावन्त्येकस्येति क॰ घ॰ ।
(५) अस्मिन् श्लोकार्द्धस्थले ख॰ ग॰ ङ॰ पुस्तकेषु श्रूयन्ते तानि सर्वाणि ऋषेः सूक्तं हि तस्य तत् इति पाठो वर्त्तते ।
(६) याः स्युरिति ख॰ ग॰ ङ॰ ।
(७) वैविध्यमेवं सूक्तानामिहेति ख॰ ग॰ ङ॰ ।
(८) वै इत्यत्र यैरिति क॰ ख॰ घ॰ ङ॰ ।
(९) यानि इति घ॰ ।
(१०) निगद्यन्तेऽत्र कानिचित् इति ख॰ ग॰ पुस्तकान्तरेषु ।

सालोक्यात्साहचर्याद्वा तानि नैपातिकानि तु।
तस्मादङ्गप्रकारेऽपि[१] सूक्ते स्यात्सूक्तभागिनी ॥ १९ ॥
देवता तद्यथासूक्तमविशेषं[२] प्रतीयते।
भिन्ने सूक्ते[३] वदेदेव देवतामिह लिङ्गतः ॥ २० ॥
तत्र तत्र यथावच्च मन्त्रान् कर्मसु[४] योजयेत्।
देवतायाः परिज्ञानात्तद्धि कर्म समृध्यते ॥ २१ ॥
आद्यन्तयोस्तु सूक्तानां प्रसङ्गपरिकीर्त्तनात्।
स्तोतृभिर्देवतास्तास्ता उपेक्षेतेह[५] मन्त्रवित् ॥ २२ ॥
तत् त्वाहुः कतिभ्यस्तु कर्मभ्यो नाम जायते।
सत्त्वानां[६] वैदिकानां च[७] यदन्यदिह[८] किञ्चन ॥ २३ ॥
नवभ्य इति नैरुक्ताः पुराणाः[९] कवयश्च ये।
मधुकः श्वेतकेतुश्च[१०] गालवश्चैव मन्वते[११] ॥ २४ ॥
निवासात्कर्मणो रूपान्मङ्गलाद्वाच आशिषः।

---

(१) अङ्गप्रकारोऽपि इति क० ङ० घ०।
(२) अविशेष्येति ख०, अविशेष्यमिति ग० ङ० पुस्तकान्तरञ्च।
(३) भिन्नसूक्ते इति क० घ०।
(४) कर्म प्रयोजयेदिति ख०।
(५) देवतास्तास्ता उपेक्षेतेव इति ख०। देवतास्तासामपेक्षेतेह इति क० घ०।
(६) स्वत्वानामिति क०।
(७) वा इति क० ग०।
(८) यद्वान्यदिहेति क० घ०।
(९) पौराणा इति क० घ०।
(१०) मधुकाश्च श्वेतकेतुश्चेति क० घ०।
(११) मन्यते इति क० ख० घ० ङ०।

यदृच्छयोपवसना[१]त्तथामुष्यायणाच्चपात्[२] ॥ २५ ॥

चतुर्थं इति तत्राहुर्यास्कगार्ग्यरथीतराः[३] ।

आशिषोऽथार्थवैरूप्या[४] द्वाचः कर्मण एव च ॥ २६ ॥

सर्वाण्येतानि नामानि कर्मणास्त्वाह[५] शौनकः ।

आशीरूपस्य वाक्यस्य[६] सर्वं भवति कर्मतः ॥ २७ ॥

यदृच्छयोपवसना[७] त्तथामुष्यायणाच्च[८] यत् ।

तथा तदपि कर्मैव तच्छृणुध्वन्तु[९] हेतुतः[१०] ॥ २८ ॥

प्रजाः कर्मसमुत्था[११] हि कर्मतः सत्वसङ्गतिः[१२] ।

क्वचित् संज्ञायते[१३] सत्त्व निवासात्तत्प्रजायते[१४] ॥२९॥

यादृच्छिकं तु नामाभिधीयते[१५] त्विह कुत्रचित्[१६] ।

---

(१) यदृच्छयोपवचनादिति क० ङ० घ० ।
(२) तथा म्यायणाचेति क० घ० ।
(३) रथन्तरा इति ख० ।
(४) चाशिषोऽथ च वैरूप्यात् इति क० घ० । चाशिषोऽर्थवैरूप्यादिति ख० ङ० ।
(५) कर्मतस्त्वाह इति क० ग० ।
(६) वाक्यस्य इति ख० ग० ङ० ।
(७) यदृच्छयोपवचनादिति ख० ।
(८) यदृच्छया निवासाच यद्वा म्यायणाचेति क० घ० ।
(९) तच्छृणु त्वं च इति ग० ।
(१०) हेतवः इति ख० ग० ङ० पुस्तकान्तरेषु ।
(११) प्रजाकर्मसमुत्था इति क० ख० ।
(१२) कर्मणः सत्त्व जायते इति क०, सत्वगा गतिः इति ख० ।
(१३) सतो निवसते इति क० घ०, क्वचित् स जायते इति ग० ।
(१४) तत्र जायते इति घ० ।
(१५) नाम नामाधीयते इति ख० । यादृच्छिकं नाम नाम धीयते क० ङ० ।
(१६) यत्र कुत्रचिदिति ख०, यश्चिह क्वचिदिति घ० ।

औपम्यादेव(१) तद्विद्याद्(२) भावस्यैवेह कस्यचित् ॥ २० ॥
नाकर्मकोऽस्ति भावो हि न(३) नामास्ति(४) निरर्थकम् ।
नान्यत्र भावान्नामानि तस्मात्सर्वाणि कर्मतः ॥ २१ ॥
मङ्गलात् क्रियते यत्तु नामोपवसनाच्च(५) यत् ।
भवत्येव तु सा ह्याशीः स्वस्त्यादेर्मङ्गलानि च(६) ॥ २२ ॥
अपि कुत्सितनामाय(७)मिह(८) जीवेत्कथञ्चिरम् ।
इति क्रियन्ते नामानि भूतानां विदितान्यपि(९) ॥ २३ ॥
मन्त्रा नानाप्रकाराः स्युर्दृष्टा वै(१०) मन्त्रदर्शिभिः ।
स्तुत्या चैव विभूत्या च वाक्प्रभावेण चात्मनः(११) ॥ २४ ॥
स्तुतिः प्रशंसा निन्दा च संशयः परिदेवना(१२) ।
स्पृहाशीः कत्थना याच्ञा(१३)प्रश्नः प्रैषः प्रवह्लिका(१४) ॥ २५ ॥
नियोगश्चानुयोगश्च श्लाघा विलपितञ्च यत् ।

---

(१) औपम्यादमीति ख०, औपम्यादिह इति ग० घ० ङ० ।
(२) तद्वक्ते इति घ० ।
(३) ना इति घ० ।
(४) तन्नामाच्च निरर्थकमिति ख० ।
(५) यच्च नामोपवचनच्च इति क० ख० घ० ।
(६) आशास्ते मङ्गलानि च इति क० घ० । मङ्गलादिहेति ख० ङ० ।
(७) अपि किल्बिषितनामायमिति ख० ।
(८) अपि इति घ० ।
(९) निन्दितान्यपि इति क० घ० ।
(१०) ये इति ग० ङ० पुस्तकान्तरच्च ।
(११) प्रभावाद्देवतात्मन इति ख० ग० अन्यत्पुस्तकञ्च ।
(१२) परिदेवना इति क० ङ० ।
(१३) कथनायाच्येति क० ।
(१४) प्रवल्हिका इति ख० ग० ।

आचिख्यासा[१]ऽथ संलापाः परिचाख्यान[२]मेव च ॥ २६ ॥
आहमख्या नमस्कारः प्रतिरोध[३]स्तथैव च ।
सङ्कल्पश्च प्रलापश्च प्रतिवाक्यश्च नाम यत्[४] ॥ २७ ॥
प्रतिषेधोपदेशौ च प्रमादापह्नवौ च यत्[५] ।
उपप्रैषश्च यः प्रोक्तः सञ्ज्वरो नाम[६] विस्मयः ॥ २८ ॥
आक्रोशोऽभिलपश्चैवा[७]क्षेपः शापस्तथैव च ।
उपसर्गा निपाताश्च[८] नाम चाख्यातमित्यपि[९] ॥ २९ ॥
भूतं भव्यं भविष्यच्च पुमांस्त्रय[१०]नपुंसकम् ।
एवंप्रकृतयो मन्त्राः सर्ववेदेष्विति स्थितिः[११] ॥ ४० ॥
तेषां निदर्शनार्थाया[१२] ऋचोऽर्धर्चाः पदानि च ।
ब्राह्मणे चाथ कल्पे च निगद्यन्तेऽत्र कानिचित्[१३] ॥ ४१ ॥

---

(१) आचिख्यासेति ख॰ ।
(२) संलापा परिचाख्यान इति घ॰ ।
(३) प्रतिरोधः इति घ॰ प्रतिषेध इति अन्यत्पुस्तकम् ।
(४) तथैव च इति ग॰ अन्यत्पुस्तकञ्च ।
(५) च ह इति ग॰ अन्यत्पुस्तकञ्च ।
(६) यस्य इति ख॰ ग॰ ङ॰ अन्यत्पुस्तकञ्च ।
(७) आक्रोशोऽभिष्टवश्चैव इति ग॰ अन्यत्पुस्तकञ्च, आक्रोशोऽभिनवश्चैव इति ख॰ ।
(८) उपसर्गा निपाताश्चेति क॰ घ॰, उपसर्गा निपातश्चेति ख॰ ।
(९) चाख्यानमेव चेति क॰ ।
(१०) स्त्री च इति ग॰ अन्यत्पुस्तकञ्च ।
(११) सर्ववेदेषु सर्वशः इति ख॰ ग॰ ङ॰ अन्यत्पुस्तकञ्च । सर्वदेवेष्विति स्थितिरिति घ॰ ।
(१२) वाक्यार्थदर्शनार्थाया इति ङ॰ अन्यत्पुस्तकञ्च ।
(१३) विधौ कल्पे च देवे च निगद्यन्तेऽत्र कानिचिदिति क॰ घ॰ ।

शब्देनोच्चरितेनेह येन द्रव्यं प्रतीयते।
तदक्षरविधौ युक्तं नामेत्याहुर्मनीषिण ॥ ४२ ॥
अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तय(१)।
तन्नाम कवय प्राहुर्भेदे वचनलिङ्गयो ॥ ४३ ॥
क्रियासु बह्वीष्वभिसंश्रितो य
पूर्वापरीभूत इहैक एव।
क्रियाभिनिर्वृत्तिवशेन सिद्ध
आख्यातशब्देन तमर्थमाहु ॥ ४४ ॥
क्रियाभिनिर्वृत्तिवशोपजात
कृदन्तशब्दाभिहितो यदा स्यात्।
सख्याविभक्त्यव्ययलिङ्गयुक्तो
भावस्तदा द्रव्यमिवोपलक्ष्य(२) ॥ ४५ ॥
यथा नानाविधै शब्दैरपश्यन्नृषय पुरा।
विविधान्यपि(३) वाक्यानि तान्यनुक्रमत शृणु ॥ ४६ ॥
रूपादिभि स्तुति प्रोक्ताऽथाशी(४) स्वर्गादिभिस्तथा।
यानि वाक्यान्यतोऽन्यानि(५) तान्यपि स्युरनेकधा ॥ ४७ ॥

---

(१) विभक्तय इति ग॰ अन्यत्पुस्तकस्य।
(२) शब्देनेत्यादि भावस्तदा द्रव्यमिवोपलभ्य इत्यन्त सन्दर्भ क॰ ख॰ चिह्नितपुस्तकयोर्नोपलभ्यन्ते।
(३) विविधानीह इति ख॰ ग॰ घ॰।
(४) आशीरिति क॰ ख॰ ग॰।
(५) यानि इति अन्यत्पुस्तकस्य।

मन्त्रे[१] प्रशंसा[क] भोजस्य[२] चित्रदत्[ख] सौभरेः[३][ग]स्तुतिः।
आक्रोशार्थास्तु दृश्यन्ते[घ]माता चेत्यभिमेथति[४] ॥४८॥
ऋज्ञोघमन्नं[ङ] निन्दा च[५] शापो[च] येमेत्यृगेव तु।
याञ्ञा[६] [छ]यदिन्द्रचित्रेति चेपो भीदमिति त्वृचि ॥४९॥
आशीस्तु[ज] वात आवातु दण्डेति परिदेवना[७]।
प्रश्नश्च प्रतिवाक्यश्च[झ] पृच्छामि त्वेत्यृचौ पृथक् ॥५०॥
संशयोऽधःस्विदासीच्च[ञ] कत्थना[८] स्या[ट]दहं मनुः।
इमं नो[ठ] यज्ञमित्यस्यां[ड] नियोगः[९] पाद उच्यते[१०] ॥५१॥

---

(१) मन्त्र इति क॰ घ॰।

(२) प्रसङ्गाद्भोजस्य इति क॰ घ॰ मन्त्रप्रशंसा भोजस्येति ग॰।

(३) सौभरस्तुतिरिति ख॰।

(४) मा मामेत्याभिमेथति इति ख॰, माता मेत्यभिमेथति इति क॰ङ॰।

(५) ऋज्ञोघमन्नस्तिदाच इति ख॰।

(६) यास्या इति ख॰, याच्या इति ग॰, यच्ना इति घ॰ ङ॰।

(७) दण्डादिपरिवेदना इति घ॰, दण्डेतिपरिदेवना इति ख॰ च॰।

(८) संशयोध स्विदासीदित्यकाथना इति क॰ घ॰, कच्छना इति ङ॰।

(९) यज्ञमित्याद्यानियोग॰ इति ख॰।

(१०) उत्तमे इति क॰ घ॰।

---

(क) ऋ॰ १०,१०७,१०। (ख) ऋ॰ ८,२१,१८। (ग) ऋ॰ ८,१९, २। (घ) ऋ॰ १,१६०, २१, १८५,१०। (ङ) ऋ॰ १०, ११७, ६। (च) ऋ॰ ८, २०,२०। (छ) ऋ॰ ५,३९, १। (ज) ऋ॰ १०,१८६, १। (झ) ऋ॰ १, १६४, ३४। (ञ) ऋ॰ १०, १२९, ५। (ट) ऋ॰ ४, २६, १। (ठ) ऋ॰ १, १, ४। (ड) ऋ॰ १, २६, १।

(क)इह ब्रवीत्वनुयोगः संलाप(१)स्तृगुपोपसे(२)(ख) ।
प्रतिषेधोपदेशौ(३) तु अचैर्मेत्य(४)चसंस्तुतौ(ग) ॥५२॥
आख्यान(५)न्तु हये जाये(घ) विलापस्तु(६)नदस्य मा(ङ) ।
अवीरामिव मा(च) आघा(७) सुदेव इति(छ) तु स्पृहा ॥५३॥
नमस्कार.(ज) ध्रुन मेघे,(८) नमस्ते अस्तु विद्युते ।
सङ्कल्पयन्निद तुभ्योऽह स्यामिति यदुच्यते(९) ॥५४॥
सङ्कल्पस्तु(झ) यदिन्द्राह प्रलापस्त्वेतग्रस्य तु.(ञ)(१०) ।
महानग्न्याहनस्या तु प्रतिरोधो भुगित्युत(११) ॥५५॥

---

(१) संलाप इति क० ग० घ० ।
(२) ऋतुपोयसे इति ख० ग० अन्यत्पुस्तकाच्च ।
(३) प्रतिषेधापदेशौ इति घ० ङ० ।
(४) अचैरित्यचसंस्तुत, इति घ० ।
(५) आख्यानमिति पुस्तकान्तरम् ।
(६) स्यादिति ख० ग० पुस्तकान्तरञ्च ।
(७) अवीरामात्मन आघा इति ख० ग० घ० ।
(८) नमस्कारो मत ऋषे इति क० घ० मेघ इति ख०, मेघे इति ङ० ।
(९) या कल्पयन्ति नो रथ परिचाल्लमिह ते इति क० ।
(१०) य इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(११) महानग्न्याह मध्यास्मात्प्रतिरोधो भुगित्यपि इति ख०, भुगि-
त्यपि इति ग०, भुगित्यमि इति पुस्तकान्तरं ।

---

(क) ऋ० १, १५, ६ । (ख) ऋ० ८, ८२, ४ । (ग) ऋ० १०, ३४, १३ । (घ) ऋ० १०, ९५, १ । (ङ) १, १०९, ४ । (च) ऋ० १०, ८६, ९ । (छ) ऋ० १०, ९४, १४ । (ज) ऋ० १, २४, १२, १३ । (झ) ऋ० ८, १४, १ । (ञ) ऋ० ६, १५, ४ ।

प्रमादस्त्वेष[१]हन्ताहं[क] नमस्व[ख] इत्यभिष्टवः[२] ।
इन्द्राकुत्सेत्युपप्रैषो[ग][३] न विजानामि[घ] संज्वरः ॥ ५६ ॥
होतापचदिति प्रैषः[४] को अद्येति तु विस्मयः ।
जामय[५]पक्कवो नेति विततादिः[ङ] प्रवह्लिका[६] ॥ ५७ ॥
[च]न मृत्युरासीदित्येतामाचिख्यासां[७] प्रचक्षते[८] ।
अभिशापो[९]प्रजाः सन्तु भद्र[१०]माशीस्तु[छ] गौतमे[११] ॥ ५८ ॥
यक्ष्येवं प्रकार[१२]न्तु शक्यं द्रष्टुमिहार्षजम्[१३] ।

---

(१) प्रमोदस्त्वेष इति घ० ।
(२) प्रमादस्त्वेकहन्ताहं नमस्व इत्यभ्वव इति ख०, नमस्व इत्यभष्टवः इति ग० ।
(३) इन्द्राकुत्सेत्यप्रैषो इति ख०, इन्द्राभरेत्युपप्रैषो इति क० ङ० ।
(४) होतापचदितिप्रैषा इति ख० ।
(५) जामये इति घ०, जामम्नु इति ग०, यामनु इति ख० ।
(६) प्रवल्हिका इति ख० ग० ।
(७) माचिख्यासमिति क०, माविद्यासामिति ख०,माचिख्यासमिति घ० ।
(८) प्रचक्षसे इति क०, प्रचक्षमे इति ख० ।
(९) आविशापोः इति ख० ।
(१०) यद्रमिति ख० ।
(११) इगौतमे इति ख० ।
(१२) मप्तमेव प्रकारमिति ख० ।
(१३) इतीदृशमिति ख० ग० पुस्तकान्तरस्य ।

---

(क) ऋ० १०, ११९, ९ । (ख) ऋ० ७, ३८, १० । (ग) ऋ० ५, ३१, ९ । (घ) ऋ० १, १६४, ३७ । (ङ) ऋ० १, १५२, ३ । (च) ऋ० १०, १२९, २ । (छ) ऋ० १, ७९, १० ।

वक्तुं प्रयोगतश्चैषामृक्सूक्तार्धर्चसंश्रितम्(१) ॥ ५९ ॥
एते तु मन्त्रवाक्यार्था देवतां सूक्तभागिनीम्(२) ।
संश्रयन्ते(३) यथान्याय स्तुतिश्चचानुमानिकी(४) ॥ ६० ॥
भवद्भूत भविष्यच्च जङ्गमं स्थावरञ्च यत्(५) ।
अस्यैके(६)सूर्यमेवैकं प्रभव प्रलयं विदुः ॥ ६१ ॥
(क)असतश्च (ख)सतश्चैव (ग)योनिरेषा(७) (घ)प्रजापतिः ।
यद(८)क्षरञ्चा(ङ)व्यय(च)ञ्च यच्चैत(छ)द्ब्रह्म(९)शाश्वतम् ॥ ६२ ॥
कृत्वैव(१०) हि(ज) त्रिधा(झ)त्मानमेषु लोकेषु (ञ)तिष्ठति ।

---

(१) ऋक्सूक्तार्धर्चमाश्रितमिति इति क०, चैषां यृक्सूक्तार्धर्चसंश्रितमिति ख० ।
(२) देवता सूक्तभागिनामिति क० घ०, देवता सूक्तभागिनी इति ख० ।
(३) संभूयते इति ख० ।
(४) स्ता च्चानुमानिकी इति ख०, तत्रानुमानिकी इति घ० ।
(५) भवद्भूतस्य भव्यस्य जङ्गमस्थावरस्य च इति ख० ग० पुस्तकान्तरञ्च ।
(६) एते इति क० घ० ।
(७) एषामिति क० ।
(८) यदक्षरञ्च वाच्यमिति ग०, वाक्यमिति ङ० पुस्तकान्तरञ्च ।
(९) यथैतद्ब्रह्म इति ग० ङ० पुस्तकान्तरञ्च ।
(१०) कृत्वेव इति ख० ग० पुस्तकान्तरञ्च ।

---

(क) ऋ० ५, १२, ४ । (ख) ऋ० १, ३६, २ । (ग) ऋ० १, १०४, १ । (घ) ऋ० ४ ५३, २ । (ङ) ऋ० १, १६४, ४२ । (च) ऋ० ६, ३७, ३ । (छ) ऋ० १, १०, ४ । (ज) ऋ० १, ११७, २४ । (झ) ऋ० १, १६३, ६ । (ञ) ऋ० १, ५१, ११ ।

(क)देवान् यथायथं(ख) सर्वान् निवेश्य(ग) स्वेषु(घ) रश्मिषु ॥ ६३ ॥
एतद्भूतेषु(१) लोकेषु अग्निभूतं स्थितं त्रिधा ।
(ङ)ऋषयो (च)गीर्भि(छ)रर्चन्ति व्यश्नितं(२) (ज)नामभि(झ)स्त्रिभिः ॥ ६४ ॥
तिष्ठत्येव च(३) (ञ) भूतानां(ट) जठरे जठरे ज्वलन् ।
विष्वानं चैनमर्चन्ति होत्रायां(ठ) शुक्रवर्हिषः ॥ ६५ ॥
इहैव(ड) पवमानो(ढ)ऽग्नि(ढ)र्मध्यमोऽग्निस्तु(ण) पावकः(४) ।
अमुष्मिन्नेव(६) विमेन्तु लोकेऽग्निः(त) शुचिरुच्यते ॥ ६६ ॥
इहाग्निभूतस्त्वृषिभिर्लोके स्तुतिभिरीडितः(७) ।
(थ)जातवेदाः स्तुतो मध्ये स्तुतो(द) वैश्वानरो दिवि ॥ ६७ ॥

---

(१) एतमेवेषु इति क० घ० ।
(२) व्याश्नितमिति ङ० घ० पुस्तकान्तरेषु ।
(३) भूय च इति ख०, स्थ हीति ग० पुस्तकान्तरेषु ।
(४) पवमानाग्निरिति क० घ० ।
(५) वनस्पतिरिति ख० ग० ङ० पुस्तकान्तरेषु ।
(६) अमुष्मिन्नेव इति ग० घ० पुस्तकान्तरेषु ।
(७) ईलितः इति क० ख० घ० ।

---

(क) ऋ० १, १, २ । (ख) ऋ० १, १६१, ८ । (ग) ऋ० ८, ८४, ८ । (घ) ऋ० १, १३४, ४ । (ङ) ऋ० १, ४८, १४ । (च) १, ६, ६ । (छ) ऋ० १, १०, १ । (ज) ऋ० २, १५५, ६ । (झ) ऋ० ८, ५६, ५ । (ञ) ऋ० ३, २७, ६ । (ट) ऋ० १, १०४, ६ । (ठ) ऋ० १, ३, २ । (ड) ऋ० ८, १०१, १४ । (ढ) ऋ० १, १, ० । (ण) ऋ० १, ६०, ४ । (त) ऋ० १, ६६, २ । (थ) ऋ० १, ७७, ५ । (द) १, ५९, ६ ।

(क)रसान् रश्मिभि(ख)रादाय(ग) वायुनाऽयं गतः सह(१)।
(घ)वर्षत्येष च यल्लोके(ङ) तेने(च)न्द्र (छ)इति स स्मृतः(२) ॥ ६८ ॥
(ज)अग्नि(झ)रस्मि(ञ)न्नथेन्द्रस्तु मध्यतो(३)(ट)वायुरेव च।
(ठ)सूर्यो (ड)दिवीति विज्ञेयास्तिस्र एवेह(४) देवताः ॥ ६९ ॥
एतासामेव माहात्म्यान्नामान्यत्वं विधीयते।
तत्तत्स्थानविभागेन तत्र तत्रोपलक्षयेत्(५) ॥ ७० ॥
(ढ)तासा(ण)मियं (त)विभूतिर्हि (थ)नामानि यदनेकशः।
(द)आहुस्तासां तु मन्त्रेषु(ध) कवयोऽन्योऽन्ययोनिताम्(६) ॥ ७१ ॥
यथास्थानं(न) प्रदिष्टास्तु(७) सामान्येन देवताः।

---

(१) सह संस्तुत इति क० ख०।
(२) तु स्तुत इति क० ख०।
(३) मध्यत इति ग०।
(४) एवहि इति क० ख०।
(५) तत्र तत्रैव दृश्यते इति ग० ङ० पुस्तकान्तरयोः।
(६) अन्योऽन्ययोनितामिति ख०।
(७) स्तु इति क०।

---

(क) ऋ० १, १६, ८। (ख) ऋ० ४, २६, ६। (ग) ऋ० १, १४, १०। (घ) ऋ० ५, ८४, ३। (ङ) ऋ० १, ३२, ६। (च) ऋ० १, २, ५। (छ) ऋ० १, १०६, ३। (ज) ऋ० १, १, २। (झ) ऋ० १, ६, ६। (ञ) ऋ० १, ४, ३। (ट) ऋ० १, १३४, ३। (ठ) ऋ० १, ३३, १०। (ड) ऋ० १, ६, १। (ढ) ऋ० १, ३३, ८। (ण) ऋ० १, ४८, ७। (त) ऋ० १, ३०, ५। (थ) ऋ० १, ७२, ३। (द) ऋ० १, ११८, ३। (ध) ऋ० ५, ५०, ८। (न) ऋ० ३, २०, १२।

तद्भक्तास्तत्प्रधानाश्च[क] केचिदेवं वदन्ति ताः[१] ॥ ७२ ॥
[ख]पृथक् [ग]पुरस्ताद्ये तूक्ता[२] लोकाद्पितय[घ][३]स्त्रयः ।
[ङ]तेषा[च]मात्मैव तत्सर्वं यद्यद्भक्तिः प्रकीर्त्त्यते[४] ॥ ७३ ॥
तेजस्त्वे[छ] वायुधं[५] प्राहुर्वाहनञ्चैव तस्य तत्[६] ।
[ज]इमामैन्द्रीञ्च [झ]दिव्याञ्च [ञ]वाचमेवं पृथक् स्तुताम् ॥ ७४ ॥
षडङ्देवतायाः [ट]स्तुतयो द्वन्द्वशः स्तुतयश्च[७] याः ।
प्राधान्यमेव सर्वासु[८] पतीनामेव[९][ठ] तास्वपि ॥ ७५ ॥

---

(१) नैवं केचिद्वदन्ति तु इति क॰ घ॰, तु इत्यत्र ता इति पुस्तकान्तरं ।

(२) येत्यूक्ता इति ख॰, पुरस्ताद्यौयक्ता इति घ॰ ।

(३) लोकाधिपतय इति क॰ घ ।

(४) यद्यद्भक्ति कीर्त्यते इति क॰ घ॰ ।

(५) तेजस्ते वायव इति क॰ ङ॰, वायवा इति ग॰। तेजश्चे वायवा इति ख॰, ।

(६) यस्य यत् इति क॰ ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।

(७) द्विवत्सं स्तुनयश्च इति ग॰ ङ॰ पुस्तकान्तरञ्च, द्विवत्सं स्ततयश्च इति ख॰ ।

(८) प्राधान्यमेवां भूतानां इति क॰ घ॰ ।

(९) इव इति ख॰ ग॰ ङ॰ ।

---

(क) ऋ॰ ५, ३०, ९ । (ख) ऋ॰ १, १३१, २ । (ग) ऋ॰ १, १२३, १० । (घ) ऋ॰ १, ३४, २ । (ङ) ऋ॰ १, ७, १ । (च) ऋ॰ १, ११५, १ । (छ) ऋ॰ ७, ११, ३ । (ज) ऋ॰ १, ३१, १६ । (झ) ऋ॰ ८, ९०, १० । (ञ) ऋ॰ १, ३०, ६ । (ट) ऋ॰ ६, ३३, १ । (ठ) ऋ॰ ७, २८, ८ ।

[क]स्थानं [ख]नामानि भक्तिश्च[१] देवतायाः स्तुतौ स्तुतौ ।
सम्पादयन्नुपेक्षेत[२]याङ्काश्चिदिह सम्पदम् ॥ ७६ ॥
अग्निभक्तिषु तान् सर्वान्[ग]ग्रावेव[३] समापयेत् ।
यदिन्द्रभक्ति तत्त्वेन्द्रे[४] [घ]सूर्ये[५] सूर्यानुगञ्च[ङ] यत् ॥ ७७ ॥
निरूप्यते[६] हवि[च]र्यस्मै[७] सूक्तञ्च [छ]भजते च [ज]या ।
[झ]सैव [ञ]तत्र प्रधानं स्यान्न[८]निपातेन [ट]या [ठ]स्तुता ॥७८॥
[ड]इति[९]व्याख्यामेतेषां[१०] [ढ]सूक्त सामरश्मिको विधिः ।
समासेनैवसूक्तानां[११] विस्तरेण त्वनुक्रमः[१२] ॥ ७९ ॥

---

(१) भक्तिश्चेति क० ग० ।
(२) सवादो यन्नपेक्षेत इति क० ।
(३) या सर्वामसमावेव इति क० ।
(४) यदिन्द्रभक्तिस्त्वैन्द्रे इति क० घ० ।
(५) सौर्य्ये इति ङ० पुस्तकान्तरञ्च ।
(६) निरूप्यते इति घ० ।
(७) यस्मै इति घ० ।
(८) तत्र तत्र प्रधानोऽसौ न इति क० घ० ।
(९) इह इति क० घ० ।
(१०) एवैषामिति ग० ।
(११) समासयन्तु तत्सर्वमिति क० घ० ।
(१२) अनुक्रमादिति घ० ।

---

(क) ऋ० ५, ७६, ४ । (ख) ऋ० १, ७२, ३ । (ग) ऋ० १, १२४, १ । (घ) ऋ० १, २३ १७ । (ङ) ऋ० १, १, ६ । (च) ऋ० १, १२, १ । (छ) ऋ० १, ६४, २ । (ज) ऋ० १, १२३, ४ । (झ) ऋ० १, २२, २ । (ञ) ऋ० १,४८, १० । (ट) ऋ० १, ६, ६ । (ठ) ऋ० १, १७, ६ । (ड) ऋ० १, २२, १७ । (ढ) ऋ० ४, १७, ७ ।

अवश्यं वेदितव्यो हि नाम्ना[१] [क]सर्वस्य विस्तरः ।
न हि [ख]नामान्यविज्ञाय [ग]मन्त्राः शक्या हि वेदितुम् ॥८०॥
मन्त्रान्यमूर्त्तान्यपि च [घ]देवता च[२] महर्षयः ।
तुष्टुवुर्ऋषयः शक्त्या[३][ङ] तासु तासु स्तुतिष्विह[च] ॥८१॥
यैस्तस्मि[४][छ]रिन्द्रः [ज]सोमश्च [झ]वायुः [ञ]सूर्यो [ट]बृहस्पतिः ।
[ठ]चन्द्रोऽथ[ड]विष्णुः[ढ]पर्जन्यः[ण]पूषा वा[५][त]ऽप्यृभवो[६][थ]ऽश्विनौ॥८२
[द]रोदसी [ध]मरुतो [न]देवाः[७] [प]पृथिव्यापः [फ]प्रजापतिः ।

---

(१) नाम्नां इति क० ङ०, नाम्नः इति घ० ।
(२) देवतार्षदिति क० घ० ।
(३) तुष्टुवुश्च प्रशंसयेति क० घ० ।
(४) यैरग्निरिति घ० ।
(५) वा इति ख० ङ० पुस्तकान्तरयोः ।
(६) पूष्णोषा भगवः इति क० घ० ।
(७) देव्यः इति क० घ० ।

---

(क) ऋ० १०,१२०,६ । (ख) ऋ० १, ७२, ३ । (ग) ऋ० ६,१०,१४ ।
(घ) ऋ० १, २२, ५ । (ङ) ऋ० २, २८, ६ । (च) ऋ० १, १, २ ।
(छ ऋ० १, २, २ । (ज) ऋ० १, २, ५ । (झ) ऋ० १, १८, ४ ।
(ञ) ऋ० १, १२४, ३ । (ट) ऋ० १, २६, १० । (ठ) ऋ० १, १५०, ३ ।
(ड) ऋ० १, ८२,१६ । (ढ) ऋ० ४, ५७, ८ । (ण) ऋ० १, २३, १४ ।
(त) ऋ० १, ११०, १ । (थ) ऋ० ५, ७५, ७ । (द) ऋ० १, १६०, ५ ।
(ध) ऋ० १, १५, २ । (न) ऋ० १, २३, १९ । (प) ऋ० १, २२,१६ ।
(फ) ऋ० ४, ५३, २ ।

(क)देवौ च (ख)मित्रावरुणौ पृथक् सह च ता(ग)वुभौ ॥८३॥
(घ)विश्वे च देवाः (ङ)सविता (च)त्वष्टा वै रूपकृन्मत(१) ।
(छ)अश्वो (ज)ऽथ(झ)ऋत्विजो(ञ)वज्रो(२)(ट)ग्रावाणो रथसयुत(३) ॥७४॥
(ठ)स्तुता पृथक् पृथक् (ड)द्वे द्वे सूक्तैर्ऋग्भिश्च(४) (ढ)नामभिः ।
स्तुतौ स्तुतौ प्रवक्ष्यामि (ण)तानि (त)तेषामनुक्रमात् ॥८५॥
व्यवस्थे(थ)न्मन्त्रमात्रेण लिङ्गै(द)रग्रैश्च(५) लक्षितम् ।
हविर्भ्यद्धि(६) प्रधानैश्च(७) नामाङ्गानैश्च केवलैः ॥८६॥

---

(१) रूपकृन्मुख इति ग० ।
(२) यज्ञ इति ग० ।
(३) रथसयुग इति ग० ।
(४) सूक्तैर्ऋग्भिश्च इति ग० ।
(५) तु इति ग० ।
(६) हविर्भ्यद्धि इति ग० घ०, हविर्भिर्द्धि इतिपाठः समीचीनः ।
(७) निरुक्तैरिति ग० ।

---

(क) ऋ० ६, ५६, ५ । (ख) ऋ० १, १५, २ । (ग) ऋ० १, १०६, ६ । (घ) ऋ० १, ८९, १० । (ङ) ऋ० १, २२, ८ । (च) ऋ० १, ३२, २ । (छ) ऋ० १, ३६, ८ । (ज) ऋ० १, १४०, २ । (झ) ऋ० १, ६०, ३ । (ञ) ऋ० १, ११, ७ । (ट) ऋ० १, ८९, ४ । (ठ) ऋ० ४, ३०, ७ । (ड) ऋ० १, ६९, ४ । (ढ) ऋ० १, १५५, ६ । (ण) ऋ० १, ५२ ६ । (त) ऋ० १, २, १ । (थ) ऋ० १, ३२, १३ । (द) ऋ० १, ३४, २ ।

ऐन्द्रस्तु(क)(१) मन्त्रो(२) वायव्यैर्लिङ्गै(ख)रैन्द्रैश्च लक्ष्यते(३) ।
नामधेयैश्च(४) (ग)वज्रस्य बलकृत्या बलेन च ॥ ८७ ॥
सौर्यस्तु लिङ्गैः(घ) सूर्यस्य(५) गुणैः सर्वैस्तु(६) तैजसैः ।
(ङ)नामभिश्चैव(७) चन्द्रस्य सूक्तस्य(८) (च)भजतेऽत्र यैः(९) ॥ ८८ ॥
एतासां(१०) देवतानान्तु नामधेयानुकीर्त्तनैः ।
(छ)यस्य यस्येह यावन्ति न व्यवस्यन्त्य(ज)तो(११)(झ)ऽन्यथा ॥ ८९ ॥
(ञ)अयं प्रयोगस्त्वेतेषां(ट) ज्योतिषां(१२)(ठ) त्रिषु(ड) वर्त्तते ।

---

(१) ऐन्द्रैस्तु इति ख॰ घ॰ ।
(२) मन्त्रैः इति घ॰ ।
(३) लक्षितमिति घ॰ ।
(४) नामभिश्चैव इति क॰ घ॰ ।
(५) सौर्यैश्च इति घ॰ ।
(६) च इति ख॰ घ॰ ।
(७) नामधेयैश्चेति ख॰ ग॰ घ॰ ।
(८) सूर्यस्तु इति क॰ घ॰ ।
(९) यः इति ख॰ पुस्तकान्तरेषु, पक्षिभैरिति घ॰ ।
(१०) [illegible]मिति घ॰ ।
(११) न व्यवस्यन्तः इति ग॰ घ॰ ।
(१२) ज्योतिःषु इति ख॰ घ॰ ।

---

(क) ऋ॰ १, १४०, ४ । (ख) ऋ॰ ३, ५६, ८ । (ग) ऋ॰ ५, ३२, ७ ।
(घ) ऋ॰ १, १४, ६ । (ङ) ऋ॰ १, ११४, ६ । (च) ऋ॰ १, १२३, ४ ।
(छ) ऋ॰ १, ५, ४ । (ज) ऋ॰ १, ६, ९ । (झ) ऋ॰ ४, ३२, ८ ।
(ञ) ऋ॰ १, १६, ७ । (ट) ऋ॰ १, ११६, १ । (ठ) ऋ॰ १, २५, ४ ।
(ड) ऋ॰ १, ८९, २ ।

लोकेषु मन्त्रवि[क]द्विद्वान् प्रयोगेनावधीदिति ॥ ९० ॥
[ख]नीयतेऽयं नृभिर्यस्मा[ग]न्नयत्य[घ]स्मा[ङ]द्दृशौ च तं[१] ।
[च]तेने[छ]मौ च [ज]क्रतुः [झ]कर्म समामानौ पृथक् पृथक्[२] ॥ ९१
य[ञ]द्दिश्यते च[ट] जातस्य[३][ठ] जातैर्यद्वाऽच[४]विद्यते ।
तेनेमौ तुल्यनामानावुभौ लोकौ समाश्रुतः[५] ॥ ९१ ॥
विश्वजन्यमेतेषां[६] [ड]भ्राजते व्योम्नि [ढ]मध्यमः ।
निपातमात्रे कथ्यन्ते[७] तथा[८]ग्रेयाणि कानिचित् ॥ ९२ ॥

---

(१) यस्मादिति घ० ।
(२) समानतौ इति घ० ।
(३) यतस्येति ख०, जात यत् इति घ० ।
(४) वापीति घ० ।
(५) समाश्रुता इति घ० ।
(६) वजन्तिरप्यनेकत्तु इति घ०, विश्वजन्य मयमेतेषामिति ख० ।
(७) कथ्यन्ते इति घ०, कथ्यन्ते इति ग० ।
(८) तस्य इति घ० ।

---

(क) ऋ० १, २४, १३ । (ख) ऋ० ६, २७, ३ । (ग) ऋ० ४, २१, ४ । (घ) १, १७१, ४ । (ङ) ऋ० १, १०५, १६ । (च) ऋ० १, २१, ६ । (छ) ऋ० २, ४०, २ । (ज) ऋ० १, १७, ५ । (झ) ऋ० १, २१, ८ । (ञ) ऋ० १, ४४, ६ । (ट) ऋ० १, ८६, ७ । (ठ) ऋ० ५, १५, २ । (ड) ऋ० १०, २०, २ । (ढ) १, १६४, १ ।

[क]अर्चिभिः[ख] केश्ययं[१] त्वग्निर्विद्युद्भिश्चैव[२] मध्यमः ।
असौ तु[ग] रश्मिभिः[३] केशी तेनैनामाह[४] केशिनः[घ] ॥ ९२ ॥
एतेषां तु पृथक्त्वेन त्रयाणां केशिनामिह ।
संलक्ष्यन्ते प्रक्रियासु त्रयः केशिन इत्यृचि[५] ॥ ९४ ॥
न चैवैषां[६] प्रसूतिर्वा विभूतिः स्थानजन्म वा[७] ।
निर्वक्तुं शक्यमेतैर्हि कृत्स्नं व्याप्तमिदं जगत् ॥ ९५ ॥
[ङ]वैश्वानरं[८] श्रितो ह्यग्निरग्निं[९] वैश्वानरः श्रितः ।
अनयो[च]र्जातवेदास्च तथैव[छ] जातवेदसि[१०] ॥ ९६ ॥

---

(१) ऋचिभिः केश्ययं इति ख०, अर्चिभिः केश्ययमिति ङ० ।
(२) श्चैव इति ग० घ० ।
(३) कुरश्मिभिरिति ख० ।
(४) तेन नानाह इति घ० ।
(५) प्रस्तावानि कालवच्च हवींषि च इति घ० ।
(६) नत्वेवैषां इति घ० ।
(७) विभूतिस्थानजन्म वा इति ख० ग० ।
(८) वैश्वानरे इति क० घ० ।
(९) अग्नौ इति क० घ० ।
(१०) तु तथैनौ जातवेदसौ इति क० ख० ग० ङ० ।

---

(क) ऋ० ५, ७९, ८ । (ख) ऋ० १०, १०२, ६ । (ग) ऋ० १, १९, ८ । (घ) ऋ० १, १६४, ४४ । (ङ) ऋ० ७, ५, ५, । (च) ऋ० १, ७७, ५ । (छ) ऋ० ६, १६, ४२ ।

सहोक्त्याचैकजातत्वाद्[१] व्याप्तिमत्त्वात्तु तेजस[२] ।
तस्य तस्येह[३] देवत्वं दृश्यन्ते ते [४]पृथक्[५] स्तुता ॥९७॥
यस्त्वाग्नेयमिति ब्रूम[६] सूक्तभाक् तत्र[७] पार्थिव ।
जातवेदस्यमित्युक्ते सूक्तेऽस्मिन् मध्यम स्मृत[८] ॥ ९८ ॥
वैश्वानरीयमिति तु यत्र ब्रूमो[९]ऽथ वा क्वचित् ।
सूर्यसूक्तस्य[१०] भाक्तत्र ज्ञेयो वैश्वानरस्तुतौ[११] ॥ ९९ ॥
सूर्यप्रक्लृप्तावग्नी तु दृष्टौ[१२] पार्थिवमध्यमौ ।
एतेषामेव लोकानां त्रयाणामध्वरेऽध्वरे ॥ १०० ॥
[क]रोहात्प्रत्यवरोहेण चिकीर्षन्नग्निमावृतम्[१३] ।

---

(१) एकजन्यात्वेति क० घ० ।
(२) व्याप्तिमत्त्वाच्च तेजस इति क० घ० ।
(३) यस्य यस्येह इति क० घ०, तस्य तस्य च इति ख० ग० ।
(४) च इति ख० ग० ।
(५) स्तुतिषु इति घ० ।
(६) यत्त्वाग्नेयमिति ब्रूम इति ग०, यस्त्वाग्नेयमिति घ० ।
(७) सूक्त भक्त्या तु इति क० घ० ।
(८) सूक्त भक्त्या तु मध्यम इति घ० ।
(९) इत्युक्ते यद्ब्रूयामो इति क० घ० ।
(१०) सूर्य्यं सूक्तस्येति ग० ।
(११) सूर्य्यमक्तस्य सूर्य्यस्य ज्ञेयो वैश्वानरो दिवि इति क० घ० ।
(१२) दृष्टौ इति ख०, दृष्टौ इति क० घ० ।
(१३) चिकीर्षन्नग्निमावर्त्तमिति ग० ।

---

(क) ऋ० १, ५९, २ ।

प्रस्तं[१] वैश्वानरीयेण सूक्तेन प्रतिपद्यते ॥ १०१ ॥
ततस्तु मध्यमस्थाना देवतास्त्वनुशंसति[२]।
इन्द्रञ्च[३] मरुतश्चैव स्तोचियेऽग्नि[४]मिमं पुनः ॥ १०२ ॥
तथैत[५]दुक्तमेतेषां विभूतिस्थानमम्भवम्।
यथा[६] च देवदेवस्य तत्र तत्रेह दृश्यते ॥ १०३ ॥
यद्यत्र पृथिवीस्थानं पार्थिवं चाग्निमिश्रितम्[७]।
तत्सर्वमानुपूर्व्येण[८] कथ्यमानं निबोधत ॥ १०४ ॥
जातवेदाः[क] श्रितो ह्य[९]ग्नि[ख]मग्निं वैश्वानरः[ग] श्रितः[घ]।

---

(१) प्राग्नमिति ग०।
(२) मध्यमे स्थानाद्देवतास्त्वनुशंससि इति ख०, देवतास्त्वन्न शंसति इति घ०।
(३) चन्द्रश्चेति ग०।
(४) स्तोत्रियामिमिति घ०।
(५) यथैतदिति ख० ग० घ०।
(६) तथा इति ख० ग० ङ०।
(७) वाग्निमिश्रितमिति क० घ०, वाग्निमिश्रितमिति ङ०।
(८) घ्यानुपूर्व्येति ग० घ० ङ०।
(९) ध्यपि इति घ०।

---

(क) ऋ० ३, ७७, ५। (ख) ऋ० १, १, १। (ग) ऋ० १, ५९, ६।
(घ) ऋ० १, ७५, २।

द्रविणोदा(क)स्तथेध्म(ख)श्च श्रितश्चाग्निं(१) तनूनपात्(ग) ॥ १०५ ॥
नराशंसः(घ) श्रितश्चैनं(ङ) मेन(२)मेवाश्रित(३)स्त्विलः(च) ।
बर्हिर्द्वार(छ)श्च देव्यो(ज)ऽग्नि(४)मेन(५)मेव तु संश्रिताः ॥ १०६ ॥
नक्तोषा(झ) सा च देव्यौ(६) च होतारा(ञ)वेतदाश्रयौ(७) ।
देव्य(८)स्तिस्रः श्रितास्चैनं त्वष्टा(ट) चैवैतदाश्रयः ॥ १०७ ॥
श्रितो वनस्पति(ठ)श्चैन(९) स्वाहाकृतय(ड) एव च ।
ऋचश्च(ढ) शकुनिश्चैव मण्डूका(ण)श्चैतदाश्रयाः(१०) ॥ १०८ ॥

---

(१) अग्निरिति घ० ।
(२) एतमेवमिति ग०, एवमेतमिति घ० ।
(३) चाश्रिता इति ख० घ० पुस्तकान्तरञ्च ।
(४) देवोऽग्निमिति ख० ।
(५) एतमिति घ० ।
(६) दैव्यौ इति ङ० ।
(७) एतदाश्रितौ इति घ०, होतारौ च तदाश्रयौ इति पुस्तकान्तरं ।
(८) देव्या इति ग० ।
(९) एवमिति ख० ।
(१०) तदाश्रया इति ख० ।

---

(क) ऋ० १, १५, ७-८ । (ख) ऋ० ८, ४५, २ । (ग) ऋ० १, १८८, २ ।
(घ) ऋ० १, १४२, ३ । (ङ) ऋ० १, ८, २ । (च) ऋ० १, १२८, १ ।
(छ) ऋ० १, १३, ६ । (ज) ऋ० १, १४०, ७ । (झ) ऋ० १, १३, ७ ।
(ञ) ऋ० १०, ६५, १० । (ट) ऋ० १, ३२, २ । (ठ) ऋ० १, ९०, ८ ।
(ड) ऋ० ६, ४, ११ । (ढ) ऋ० १, ३६, ८ । (ण) ऋ० ७, १०३, ७ ।

[क]ग्रावाण[१]श्चैन[२]मन्था[३][ख]श्च नराशंसस्तथा रथः[ग] ।
[घ]दुन्दुभिश्चेषुधि[ङ]श्चैव[च] हस्तघ्नो[छ][५] भीमवो[६] धनुः[ज] ॥१०९॥
[झ]ज्या चैतदाश्रितेषुश्च[७] श्रिता अश्वाजनी[ञ][८] च या ।
[ट]वृषभो द्रुघण[९]श्चैव[ठ][१०] मेतं पितुरुलूखलम्[११][ड] ॥११०॥
नद्यश्चैवैनमापश्च सर्वाश्चौषधयस्तथा[१२] ।
रात्र्यग्नाय्य[ढ]रण्यानिः[ण][१३] श्रद्धे[त]ला[थ]पृथिवी[थ]तथा[१४] ॥१११॥

---

(१) ग्रावधा इति ख०, ग्रावधा इति ग० ।
(२) एवमिति ख०, एतमिति घ० ।
(३) मन्था इति ग० ।
(४) एनमिति ग०, एतमिति ङ०, पुस्तकान्तरञ्च ।
(५) हस्तघ्नी इति पुस्तकान्तरं ।
(६) अभीशव इति पाठः सुसङ्गततया भाति ।
(७) चाश्रयेषुरिति घ० ।
(८) चाश्वाजनी इति ख०, चाश्वाजनी इति घ० ।
(९) वृषभो द्रुघण इति ग०, वृषाद्रुघण इति घ० ।
(१०) एनमिति ग० ङ० पुस्तकान्तरञ्च, एवमिति घ० ।
(११) वृषभेद्रुघणश्चैलमेवैतं पितुमुलूखलमिति ख० ।
(१२) तथेति ख०, सर्वा चौषधयश्च चेति ग० ङ० पुस्तकान्तरञ्च ।
(१३) रात्रिरथाग्नाय्यरण्यानी इति ख०, रात्र्यग्नाय्यरण्यानी इति ग० ङ०, आदर्शपुस्तकमात्रे अरण्यानीति दीर्घस्वरान्तपाठोऽस्ति ।
(१४) श्रद्धा द्यावा पृथिव्यथेति क० घ० ।

---

(क) ऋ० १, ८९, ४ । (ख) ऋ० ८, ४३, ५ । (ग) ऋ० १, ३०, १८ ।
(घ) ऋ० १, २८, ५ । (ङ) ऋ० ६, ७५, ५ । (च) ऋ० ६, ७५, १४ ।
(छ) ऋ० ६, ७५, २ । (ज) ऋ० ६, ७५, ३ । (झ) ऋ० ५, ६२, ० ।
(ञ) ऋ० १, ३१, ५ । (ट) ऋ० १०, ६५, १८ । (ठ) ऋ० १, २८, ६ ।
(ड) ऋ० ५, ४६, ८ । (ढ) ऋ० १०, १४६, २ । (ण) ७, ३२, १४ ।
(त) ऋ० १, १३, ६ । (थ) ऋ० १, २२, १३ ।

भजते चैन[१] मेवोर्व्यौ[क][२] दन्दभूते च रोदसी[ख][३] ।
मुषलोलूखले[ग] चैनं[४] हविर्धाने च ये स्तुते ॥११२॥
जोष्ट्री[५] चोर्जाहुती[घ] चैन[६] सुदुघा[७][ङ] च विपाट्[च] सह ।
यौ च देवौ शुनासीरौ[छ][८] तौ चाग्नी चैतदाश्रयौ[९] ॥११३॥
लोके वै[१०] यत्र वै प्रातः सवनं[ज] क्रियते मखे[झ] ।
वसन्त[ञ]शरदौ[ट] चर्तू स्तोमौ[ठ]ऽनुष्टुबयो[ड] त्रिवृत्[ढ][११] ॥११४॥

---

(१) चैवमिति ख०, भजेते चैतमिति क० घ०, भजेते चैनमिति ङ० ।
(२) एवार्व्यो(घ) इति क० ग० घ० ।
(३) तु रोदसा इति ख० ।
(४) एवेति क० घ० ।
(५) जोष्ट्रा इति ख० ।
(६) चोर्जाहुतिश्चैनमिति ख०, एवेति क० घ० ।
(७) सदुघा इति ख० ।
(८) सुनासीरौ इति ख० ।
(९) चैवाग्नेतदाश्रयौ इति क० घ०, चाग्नि चैतदाश्रयेति ख० ।
(१०) लोकोऽयमिति क०ग० घ० ङ० ।
(११) च त्रिवृत् इति क० घ० ।

---

(क) ऋ० १, ३४, ८ । (ख) ऋ० १, १६०, ५ । (ग) ऋ० १, २८, ६ ।
(घ) ऋ० ८, ३६, ४ । (ङ) ऋ० ३, ३३, १ । (च) ऋ० ३, ३३, १ ।
(छ) ऋ० ४, ५७, ५ । (ज) ऋ० १, १६, ५ । (झ) ऋ० १, ६, ८ ।
(ञ) ऋ० १०, ९०, ६ । (ट) ऋ० १, ७२, ३ । (ठ) ऋ० १, ८, १० ।
(ड) ऋ० १, २८, ६ । (ढ) ऋ० १, १४०, २ । (ण) ऋ० ६, ७५, ४ ।

गायत्री[क] चैकविंशश्च यच्च साम[ख]रथन्तरम्[१][ग] ।
साध्याः[घ] साम च वैराजमाद्य[ङ]श्च वसुभिः[च][२] सह ॥११५॥
इन्द्रेण च मरुद्भिश्च सोमेन वरुणेन च ।
पर्ज्जन्येनर्त्तुभिश्चैव विष्णुना चास्य संस्तवः ॥११६॥
अस्यैवाग्नेस्तु पूष्णा च[३] साम्राज्यं वरुणेन च ।
देवता वाहनञ्चैव[४] हविषां[५] वहनं तथा ॥११७॥
देवतामर्थतत्त्वज्ञो मन्त्रैः संस्तूयते[६]हविः[७] ।
अयन्ततस्या[८]पि सतो[९] हविरेकं[१०] निरूप्यते ॥११८॥
कर्म दृष्टे च[११] यत् किञ्चिद्[१२] विषये[१३] परिवर्त्तते ।

---

(१) साध्यं रथन्तरमिति ख० ।
(२) आद्यश्चवसुभिरिति ख०, आद्याश्च वसुभिरिति ग० घ० ङ० ।
(३) पुष्णश्चेति ख०, पुष्णा चेति ङ० पुस्तकान्तरञ्च ॥
(४) अपि इति क० घ० ।
(५) हविष इति क० घ० ।
(६) संयोजयेदिति क० घ० ।
(७) विदुरिति ख० ।
(८) असंस्कृतस्येति क० घ० ।
(९) विततः इति घ० ।
(१०) रथा इति ख०, एवमिति ग० ।
(११) तु इति क० घ०, कर्म्म दृष्टेष्विति ङ० पुस्तकान्तरञ्च ।
(१२) य कश्चिदिति क० घ० ।
(१३) विकल्पे इति ख०, विषये इति ङ० ।

---

(क) ऋ० १०, १४, १६ । (ख) ऋ० १,६२,२ । (ग) ऋ० १०,१८२,१ ।
(घ) ऋ० १, १६४,५० । (ङ) ऋ० २, १०५, ६ । (च) ऋ० १, ५८, ३ ।

इत्युक्तोऽयं गणः सर्वः पृथिव्याश्रयो महान् ॥११९॥
यस्त्विन्द्रो(१) मध्यमस्थानो गणः सोऽयमतः परः ।
विमानानि च दिव्यानि गन्धर्वाप्सरसां(२) तथा ॥१२०॥
इन्द्राग्नयस्तु(३) पर्जन्यो रुद्रो वायुर्बृहस्पतिः ।
वरुणः कश्च मृत्युश्च देवश्च ब्रह्मणस्पतिः(क) ॥१२१॥
मन्यु(४)श्च विश्वकर्मा च मित्रः क्षेत्रपति(५)र्यमः ।
तार्क्ष्यो वातोऽप्पतिर्येव सरस्वांश्चैवमथ तु(६) ॥१२२॥
अपामपाद्दधिका(ख) च(७) सुपर्णो(ग)ऽथ पुरूरवाः(घ) ।
अतो(ङ)ऽसुनीति(च)र्वेन(छ)श्च(८) तथेन्दुश्च स्त्रियो दितिः(ज)(९) ॥१२३॥

---

(१) त्विन्द्र इति क० ख० ।
(२) गन्धर्वाप्सरस इति क० घ०, गन्धर्वाप्सरसामिति ग० ङ० पुस्तकान्तरञ्च ।
(३) इन्द्राग्नयस्तु इति क० ख० ।
(४) मन्युरिति ख० ङ० ।
(५) मित्रक्षेत्रपतिरिति ख० ग० ।
(६) तथ तु इति क० ख० ।
(७) अपामपाद्धिका चेति क० ख० ङ०, अपामपाद्धिकाश्चेति ग० ।
(८) वेनश्चेति ख० ।
(९) तथैतस्मायये दिति इति क० ख०, तथेन्दुश्च स्त्रियो दितिरिति ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० २, २४, ७ । (ख) ऋ० ४, ३८, ९ । (ग) ऋ० १, १६४, ७ ।
(घ) ऋ० १०, ९५, ४ । (ङ) ऋ० ८, ९०, ५ । (च) ऋ० १०, ५९, ५ ।
(छ) ऋ० १, ८३, ५ । (ज) ऋ० ७, १५, १२ ।

त्वष्टा(क) च सविता चैव वातो(ख)(१)वाचस्पतिस्तथा ।
धाता प्रजापतिश्चैव अथर्वाण(ग)श्च(२) ये स्तुताः ॥१२४॥
भगव(घ)श्चैवमग्निश्च(३) तथेला(ङ) चैव याः स्तुताः ।
विधातेन्दुरहिर्बुध्न्यः (च)सोमोऽहिरथ चन्द्रमाः ॥१२५॥
विश्वानर(छ)श्च वै(४)देव ऋभूणां(ज) संस्तुतो(५) गणः ॥१२६॥
मरुतोऽङ्गिरसश्चैव पितरस्तैर्भिः सह ।
राका(झ)(६)वाक्(ञ)सरमा(ट)श्रद्धा(ठ)श्च(७)भगवो(ड)ऽघ्न्या सरस्वती॥१२७॥
यम्यु(८)र्वशी(ढ)सिनीवाली(ण) पथ्या(त) स्वस्ति(थ)स्तथाः कुहूः ।

---

(१) वाचः इति क॰ घ॰ ।
(२) चाथर्व्वाणश्चेति ख॰ ।
(३) श्येनश्चैवैवमापश्चेति ख॰ घ॰ ।
(४) चैवेति ख॰ पुस्तकान्तरञ्च ।
(५) ब्रह्मणां चाश्रितः इति क॰ घ॰ ।
(६) एका इति क॰ ।
(७) वाक्सरमाद्याश्चेति ङ॰ ।
(८) यभ्युरिति ख॰ ।

---

(क) ऋ॰ १, ३२,२ । (ख) ऋ॰ १, २८, ६ । (ग) ऋ॰ ९, ११, २ ।
(घ) ऋ॰ १, ५८, ६ । (ङ) ऋ॰ १, १३, ९ । (च) ऋ॰ १, १८६, ५ ।
(छ) ऋ॰ १, १८६, १ । (ज) ऋ॰ ४, ३५, २ । (झ) ऋ॰ २, ३२, ८ ।
(ञ) ऋ॰ १, १६४, ४५ । (ट) ऋ॰ १, ६२, ३ । (ठ) ऋ॰ १, १०४, ९ ।
(ड) ऋ॰ १, ५८, ६ । (ढ) ऋ॰ १, १०१, ४ । (ण) ऋ॰ २, ३२, ८ ।
(त) ऋ॰ १, ५४, ५ । (थ) ऋ॰ ३, ८९, ६।

पृथिव्यनुमतिर्धेनुः सीते(क)ला(ख)द्या तथैव(१) गौः ।
गौरी(ग) च रोदसी(घ) चैव इन्द्राण्या(२)स्यैव वै पतिः ॥१२८॥
छन्दस्त्रिष्टुप् च पङ्क्ति(ङ)श्च लोकानां मध्यमश्च यः ।
एतेष्वेवाश्रयो(३)विद्यात्सवनं(च) मध्यमञ्च यत् ॥१२९॥
ऋतू च ग्रीष्महेमन्तौ यच्च सामोच्यते(४) बृहत् ।
शक्वरीषु(छ) च यद्गीतं साम्ना तन्नाम शाक्वरम् ॥१३०॥

इति बृहद्देवतायां प्रथमोऽध्यायः ।

---

(१) सीताश्चैवा दितिश्चेति क० घ०, सीतालाद्या तथैवेति ख० ग० ।
(२) चैवेन्द्राणया इति ख० ।
(३) एतस्मैवाश्रय इति क० घ०, आश्रये इति ख० पुस्तकान्तरे च ।
(४) साम्नोच्यते इति ख० ।

---

(क) ऋ० ४, ५७, ७ । (ख) ऋ० १, १८८, ७ । (ग) ऋ० ९,१२,३ ।
(घ) ऋ० १, १६७,५ । (ङ) ऋ० १०, ११०, ८ । (च) ऋ० १, १६, ५ ।
(छ) ऋ० ७, ६६, ४ ।

# अथ द्वितीयोऽध्यायः ।



आह चाग्नेव तौ[१]सोमा[क]वाग्नयौ शाकटायनः[२] ।
यस्य[३] पञ्चदशो नाम्ना सङ्ख्या[४] त्रिणवस्य[५] यः ॥१॥
संस्तुत[६]श्चैव पूष्णा च विष्णुना वरुणेन च ।
सोमवाय्वग्निकुत्सैश्च ब्रह्मणस्पतिनैव च ॥२॥
बृहस्पतिना च तथा[७] बृहत[ख]श्चैव वै पतिः[८] ।
कास्त्वचित्[९] केचिदित्याहुर्निपाताः[ग] स्तुतिषु स्तुताः[१०] ॥३॥

---

(१) द्वौ इति ख० ग० ङ० ।
(२) साकटायनः इति क० घ० ।
(३) यस्येति ख० ।
(४) सङ्ख्यायामिति क० घ० ।
(५) त्रिनवः इति दन्त्यनकारयुक्तपाठो विसृष्टः ।
(६) संस्तुतः इति क० घ० ।
(७) स बृहस्पतिना चैव इति ख०, बृहतस्पतिना चैवेति ग० ङ० ।
(८) गाम्रा यश्चापि पर्व्वतः(घ) इति ख० ग० ङ० पुस्तकान्तरेषु ।
(९) कश्चित्तु इति क० घ० ।
(१०) निपाताः स्तुतिषु स्तुताः इति क० घ० ।

---

(क) ऋ० १, ८, १० । (ख) ऋ० १, १३०, ९ । (ग) ऋ० ४,५५,२ ।
(घ) ऋ० १, ३०, ७ ।

तस्य मुख्यतमौ देवावश्विनौ(१)सूर्यमाश्रितौ ।
वृषाकपायि(२)(क) सूर्या(ख)षाः(ग) सूर्यस्यैव तु पत्नयः(३) ॥८॥
असुतोर्वाङ्(४)निवर्त्तन्ते प्रतिलोमास्तदाश्रयाः(५) ।
पुरोदया(६)त्तासुषसं सूर्यां मध्यन्दिने स्थिते ॥९॥
वृषाकपायिं(२) सूर्यास्तकाल आहुः(७) स्तुतिमृचि(८) ।
तस्या(९)श्रये(१०)सरण्यूश्च(घ)(११) भगः(ङ) पूषा वृषाकपिः(च)(१२) ॥१०॥

---

(१) त्वश्विनौ इति क० घ० ।
(२) सर्वेषु आदर्शपुस्तकेषु वृषाकपायी इति दीर्घस्वरान्तपाठो वर्त्तते ।
(३) पत्नय इति क०, पत्नतः इति ख० ।
(४) असुतोर्वागिति ट० पुस्तकान्तरश्च । असुतो वागितिपाठः शुद्धः ।
(५) पलोदये इति क० घ० ।
(६) पुरोदये इति क० घ० ।
(७) सूर्यस्य तामेवाहुरिति क० घ०, सूर्यस्य स्तानेवाहुरिति ख० ।
(८) तु निमृचि इति क०, निमुचि इति ख० ।
(९) अस्येति क० घ० ।
(१०) आश्रमे इति ग० ।
(११) तस्याएवेति ख० ।
(१२) दृष्ट्यतिरिति ख० ।

---

(क) ऋ० १०, ८६, १३ । (ख) ऋ० ५, ७३, ५ । (ग) ऋ० १, ४६, १ ।
(घ) ऋ० १०, १७, २ । (ङ) ऋ० १, २४, ८ । (च) ऋ० १०, ८६, १ ।

यमो वैश्वानरो(क) विष्णुर्वरुणश्चैकपादजः(१) ।
पृथिवी च समुद्राश्च देवा सप्तर्षयश्च ये ॥११॥
आदित्या केशिसाध्याश्च सविता(२) वसुभिर्मनुः ।
दध्यङ्(ख)थर्वा(ग) त्विषे(घ) च वाजिनो(ङ)(३)देवपत्नयः ॥१२॥
असौ तृतीयं सवनं(४) लोकः साम च(५) रैवतम् ।
वैरूपश्चैव वर्षाश्च(६) शिशिरोऽथ ऋतुस्तथा(७) ॥१३॥
त्रयस्त्रिंशश्च(८)य स्तोम(च)(९) कृष्णा मन्त्रदृशश्च ये ।
छन्दश्च जगतीनाम्ना(१०) तथाऽतिच्छन्दसश्च(११)या(१२) ॥१४॥

---

(१) अथ पादज इति क० घ० ।
(२) आदित्यपूत साध्याश्च सार्द्धश्चेति क० घ० ।
(३) वाजिनौ इति ख० ।
(४) तृतीयसवनमिति क० घ० ।
(५) तृतीयः सवेन सोमयागा चेति ख० ।
(६) वैरूप्यश्चैव मर्षाश्चेति ख० ।
(७) शिशिरश्चैव शरद् इति क० घ० ।
(८) त्रयस्त्रिंशश्चेति ख० ।
(९) यत् स्तोम इति क०घ० ।
(१०) चैवेति क० घ० ।
(११) अतिच्छन्दसाश्चेति ग०, अतिच्छन्दसाश्चेति क० ख० घ० ।
(१२) यदिति क० घ० ।

---

(क) ऋ० १, ५८, ६ । (ख) ऋ० १, ८०, १६ । (ग) ऋ० १, ८०, १६ ।
(घ) ऋ० १, ३, ७-८ । (ङ) ऋ० १, ११, २ । (च) ऋ० १, ८, १० ।

पौरुषश्चाङ्कुरस्यैतत्सर्वमेव तु[1] पौरुषं ।
एतस्यैव तु विज्ञेया देवाः संस्तविका[2]स्त्रयः[3] ॥१५॥
चन्द्रमाश्चैव वायुश्च पञ्चमं वत्सरं[4] विदुः ।
केचित्तु निर्वपत्य[5]स्य सौर्य्यं वैश्वानरं हविः ॥१६॥
सौर्य्यवैश्वानरीयं हि तत् सूक्तमिव[6] दृश्यते ।
ऋगर्द्धर्चोऽथ[7]वा पादो दृचो वा यदि वा तृचः ॥१७॥
अनेन तु प्रवादेन[8] दृष्टा मूर्द्धन्वतास्तुतिः ।
सूर्य्यवैश्वानराग्नीना[9] मैकात्म्यमिह दृश्यते ॥१८॥
हरणं तु रसस्यैतत्कर्मणाऽमुष्य[10]रश्मिभिः ।
यानीमानि च पश्यन्ति सर्वभूतानि तेजसा[11] ॥१९॥

---

(१) हेति ख० ।
(२) संस्तापिकाः इति क० घ० ।
(३) तये इति ख० ।
(४) पञ्च संवत्सरमिति क० घ०, पञ्चसंवत्सरमिति ख० ।
(५) निर्व्वपते चेति क० घ० ।
(६) न सूक्तमिहेति क० घ० ।
(७) ऋगर्द्धर्चश्चेति क० घ०, ऋगवर्द्धर्चाथेति ख० ।
(८) प्रयोगेणेति क० घ०, प्रपादेनेति ख० ।
(९) सौर्य्यवैश्वानराग्नीनामिति क० ख० घ० पुस्तकान्तरञ्च ।
(१०) रश्मिभिश्चास्य कर्म्माऽमुष्य चेति ग० ङ० पुस्तकान्तरञ्च ।
(११) येन नातिविशन्ति सूर्य्यभूतानि चक्षुषेति ख० ग० ङ० पुस्तकान्तरञ्च ।

विभागमिममेतेषां विभूतिस्थानसम्भवं ।
सम्यग्विज्ञाय(१)मन्त्रेषु तन्तु(२)कर्मसु योजयेत् ॥२०॥
अध्यापयन्नधीयानो मन्त्रां(३)श्चैवानुकीर्तयन् ।
स्थानं सालोक्यं सायुज्यमेतेषामधिगच्छति(४) ॥२१॥
अग्नेस्तु यानि सूक्तानि(५) पञ्च नामानि कारव(क) ।
यद्विंशतिस्त्रयैन्द्रस्य प्राङ्ग सूर्यस्य सप्त च ॥२२॥
तेषां पृथग्निर्वचनमेकैकस्येह कर्मजं ।
उच्यमानं यथान्यायं शृणुध्वमखिलं मया ॥२३॥
जातो यद्ये भूतानामग्रणीरध्वरे च यत् ।
नाम्ना सन्नयते वाङ्ग(६) स्तनोऽग्निरिति(७)सूरिभिः(ख) ॥२४॥
द्रविणं(ग) धनं बलं वापि प्रयच्छन्नेन(८) कर्मणा ।

---

(१) विज्ञानमिति क० ख० ।
(२) तद्देति क० ख० ।
(३) मन्त्र इति क० ख० ।
(४) एव अध्यन्तीति ख० ग० घ० पुस्तकान्तरस्य ।
(५) सूक्तेषु इति क० ख० ।
(६) नान्निस्तते चाग्ने इति क० ख० ।
(७) इत्येति क० ख० ।
(८) चेन प्रयच्छेदेनेति क० ख० ।

---

(क) ऋ० १, ९९, ६ । (ख) ऋ० १,९९,१५ । (ग) ऋ० १,९६,१७ ।

तत्कर्म दृष्ट्वा[१]कुत्स[क]स्तु प्राहैनं द्रविणोदसं[ख] ॥२५॥
अयं तनूनपाद[ग]ग्निरसौ हि तननात्तनुः[२][घ]।
ततस्तु मध्यमो यज्ञे स्थानेऽयं[३] मध्यमात्ततः[४] ॥२६॥
अनन्तरं[५] प्रजामाहुर्नपा[ङ]दिति ह्यपत्यवः।
नपादमुष्य[६]सैवायमग्निस्तेन तनूनपात् ॥२७॥
पृथक्केन समस्तेन[७] यज्ञो यच्छास्यते[८] नृभिः।
स्तुवन्त्याग्नीषु तेनेमं नराशंस[च]न्तु कारवः[९][छ] ॥२८॥
पुनाति[१०] यदिदं विश्वमेवाग्निः[११] पार्थिवोऽथ च[१२]।

(१) हत्वेति क० घ०।
(२) तपसा तनूरिति क० घ०।
(३) स्थानेऽयमिति ख०।
(४) यज्ञे यस्त्वेव मध्यमादिति क० घ०।
(५) अनन्तरामिति ख० पुस्तकान्तरञ्च।
(६) अमुष्येति ख०।
(७) समासैस्त्विति ख० ग० ङ० पुस्तकान्तरञ्च।
(८) वास्यते इति क० ख०।
(९) सूरयः इति क० घ०।
(१०) जानाति इति ख०।
(११) विश्वमेवाग्निरिति ख०।
(१२) पार्थिवोऽप्यचेति ख०।

(क) ऋ० १, १०६, ६। (ख) ऋ० ८, ८८, ३। (ग) १, १८८, २।
(घ) ऋ० १, १२०, ११। (ङ) ऋ० १, १४३, १। (च) ऋ० १, १३, ३।
(छ) ऋ० १, ११, ६।

वैश्वानरमर्षिभि[१] स्तेन पवमान[क] इति स्तुत[२] ॥१९॥
भूतानि वेदयज्जातो जातवेदाऽथ[ख] कथ्यते[३] ।
यद्वैव[४] जातविद्यो[५]ऽभूदित्था[६] जातोऽधिवेत्ति[७] वा ॥२०॥
विद्यते सर्वभूतैर्हि[८] यद्वा जातः[९] पुनः पुनः ।
तेनैव मध्यमाग्निन्द्रो[ग][१०] जातवेदा इति स्तुत ॥२१॥
पुनाति यदिदं विश्वं श्रेयोऽग्निः[घ] पार्थिवोऽप्सु सन् ।
वैश्वानरमार्षितैस्तस्मात्पवमान इति स्तुत[११] ॥२२॥

---

(१) वैश्वानर ऋषिरिति ख० ।
(२) पुनातीत्यादि पवमान इति स्तुत इत्यन्तपाठः क० घ० पुस्तकयो र्नास्ति ।
(३) जातवेदाश्च विद्यते इति क० घ० ।
(४) यद्वैव इति क० घ० ।
(५) जातं वेद इति क० घ० पुस्तकान्तरयोः ।
(६) वित्तमिति ख० ग० ङ० ।
(७) यच्च वेत्तीति क० घ० ।
(८) सर्वमेतद्धीति क० घ० ।
(९) जातामिति क० घ० ।
(१०) मध्यमाग्नेन्द्र इति ख० ग० ।
(११) अयं श्लोकः ख० ग० ङ० पुस्तकेषु पुस्तकान्तरे च न विद्यते ।

---

(क) ऋ० ८, १०१, १४ । (ख) ऋ० १, ७७, ५ । (ग) ऋ० १, २, ५ ।
(घ) ऋ० १, १, २ ।

अणिष्ठ एष(१) यत्तु त्रीन्(२)व्याप्यैको व्योम्नि तिष्ठति ।
तेनैनमृषयोऽर्चन्त(३) कर्मणा वायु(क)मब्रुवन् ॥२३॥
त्रीणीमान्यावृणोत्येको(४)मूर्त्तेन तु रसेन यत् ।
तथैनं वरुणं(ख) प्राह्वा स्तुतिष्वाहुः कृपण्यवः(५) ॥२४॥
अरोदीद(६)न्तरिक्षे यद्विद्युद्वृष्टिं ददन्नृणां(७) ।
चतुर्भिर्ऋषिभिस्तेन रुद्र(ग) इत्यभिसंस्तुतः(८) ॥२५॥
चतुर्विधानां भूतानां प्राणो भूत्वा व्यवस्थितः ।
इष्टे चैवास्य सर्व्वस्य तेनेन्द्र इति स स्तुतः(९) ॥२६॥
इरां(घ) दृणाति(१०) यत्काले मरुद्भिः सहितोऽम्बरे ।

---

(१) अनिष्टयैवेति क॰ घ॰ ।
(२) यस्तान्वा इति क॰, यन्तु त्रीनिति ख॰ ङ॰, यन्तभ्वा इति घ॰ ।
(३) अर्चन्ते इति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(४) त्रीनिमानावृणोत्येकानिति क॰ घ॰ ।
(५) तु कारवः इति क॰ घ॰ ।
(६) रोदस्यन्निति क॰ घ॰ ।
(७) विद्युद्वृष्टिरदान्नृणामिति क॰ घ॰ ।
(८) अभिधीयते इति क॰ घ॰ ।
(९) एष श्लोकः क॰ घ॰ पुस्तकयोर्नास्ति ।
(१०) इरा ददातीति क॰ घ॰ ।

---

(क) ऋ॰ ५, ४१, ६ । (ख) ऋ॰ १, २, ७ । (ग) ऋ॰ १, ४३, १ ।
(घ) ऋ॰ ५, ८३, ४ ।

रवेण महता युक्तस्तेनेन्द्रमृषयोऽब्रुवन् ॥३७॥
यदिमां प्राजयच्चै(१)को रसेनाम्बरजेन गां।
कालेऽचिरैर्वै वर्षो(२)ऽथ तेन पर्जन्य(३)माहतुः ॥३८॥
तर्पयन्त्येव यमोकान् जन्यो ऽनहितश्च यत्।
परो(४)जेता जनयिता यद्वाभिष्टुतो(५)जगौ(६) ॥३९॥
बृहन्तौ पाति यमोकावेव द्वौ मध्यमोत्तमौ।
बृहता(६)कर्मणा तेन(७) बृहस्पति(ख) रितीडितः(८) ॥४०॥
ब्रह्म वाक् ब्रह्म सत्यञ्च ब्रह्म सर्व्वमिदं जगत्।
पातारं ब्रह्मणस्तेन शौनकोऽपः स्तुवन् जगौ ॥४१॥
घर्मा(ग)(९) चितिभ्यो विद्धयद्गुतुम्बविशत् चितौ(१०)।

---

(१) प्राजयतीति क० घ०।
(२) वार्षी इति क० घ०।
(३) एर० इति ख०।
(४) पाथेयजात इति ख० ग०।
(५) एव श्लोकः क० घ० पुस्तकयोर्न दृश्यते।
(६) बृहन्तीति ख०।
(७) येनेति क० घ०।
(८) बृहस्पत्येव वै पतिरिति क० घ०।
(९) घर्मामिति ग०।
(१०) ब्रह्मचारिणमादि पविशत् चितौ इत्यन्तपाठः क० घ० पुस्तकयो-र्नदृश्यते।

---

(ख) ऋ० ५, ४३, ६। (ग) ऋ० १, ६०, ३। (घ) ऋ० ६, ४८, ९।

ददाति यदि मह्नेचे लूतावम्बरजं पुनः[१] ।
तेनैनमाह चेन्द्रस्य वामदेवः[क][२]स्तुवन् पतिं ॥४२॥
मनसेमन्तु यं दृश्यं[३] मध्यमं लोकमाश्रितं ।
शंसत्[ख] सत्येन सत्ये[ग] वै स[४] एष स्तुतवानृतं[५][घ] ॥४३॥
रवेणान्तरसैः चित्रैः[६]स्थितो व्योमन्येष मायया ।
ऋतस्य श्लोक[ङ] इत्येष पुनश्चैनं ततोऽब्रवीत् ॥४४॥
वास्तु[च] प्रयच्छंलोकस्य मध्यमस्य तु पाति यत्[७] ।
तेन वास्तोष्पतिं प्राह चतुर्भिरिममौर्वशः ॥४५॥
वाचा वेदा ह्यधीयन्ते वाचा छन्दांसि तत्र च ।
अथो[छ] वाक् सर्व्वमेवेदं तेन वाचस्पतिः स्तुतः[८] ॥४६॥

---

(१) एतच्छ्लोकार्द्धं ग० ङ० पुस्तकयोर्न विद्यते ।
(२) यात्रादेवेति क० घ० ।
(३) मनसेममिमं दृश्यमिति क० घ०, मनसेयं वुमादृश्यमिति ख०, मनसोमन्तु यद्दृश्यमिति ग० ।
(४) य इति ङ० पुस्तकान्तरच ।
(५) ऋषिरिति क० घ० ।
(६) रसं स्थितौ रवेणार्थौ इति क० घ० ।
(७) पातितः इति क० घ० ।
(८) वाचा वेदा ह्यधीयन्ते इत्यादि तेन वाचस्पति स्तुत इत्यन्तं क० घ०, पुस्तकयोर्न विद्यते ।

---

(क) ऋ० ४, १६, १८ । (ख) ऋ० ६, २३, ५ । (ग) ऋ० ९, १०९, ६ ।
(घ) ऋ० १, ४१, ४ । (ङ) ऋ० १, १९०, ४ । (च) ऋ० ८, १५, ५ ।
(छ) ऋ० १, २८, ६ ।

विश्वस्य जनयन् कर्म्म विश्वकर्म्मे[क]ति तेन सः[१] ॥५१॥
सरांसि घृतवन्त्यस्य सन्ति लोकेषु यत्त्रिषु ।
सरस्वन्त[ख]मिति प्राह वाचं प्राहुः सरस्वतीम्[ग][२] ॥५२॥
प्राणभूतस्तु भूतेषु यद्वितत्येह[३] तिष्ठति ।
तेनैनं वेन[घ]माहर्षिर्वेनो[ङ]नामेह[४] भार्गवः ॥५३॥
सद्यजे मासि मास्येनमभिमत्य[५]ततो भजन्[६] ।
तेनैनं मन्यु[च]रित्याह मन्युरेव तु तापसः ॥५४॥
यदन्तकाले भूतानामेक[७] एव नयत्यसून् ।
तेनासुनीति[छ]रुक्तोऽयं स्तुवता श्रुतबन्धुना ॥५५॥
निदाघमासातिगमे जन्म मध्ये भवत्यपां[८] ।
नपात[ज]माह तेनैनमृषिर्गृत्समदः[झ]स्तुवन्[९] ॥५६॥

---

(१) त्विति क० घ० ।
(२) इतीमन्तु श्रुतौ दीर्घतमौर्वंश्यौ इति क० घ० ।
(३) यद्वैनत्येष्विति ग०, यद्वैश्वेन्द्विति ख० पुस्तकान्तरञ्च ।
(४) आहार्चन् वेनोऽन्यमेहेति क० घ० ।
(५) अभिवत्येति ख०, अभिपत्येति ग० ।
(६) मासि मासीमामभितप्य तपोऽग्रजः इति क० घ० ।
(७) एष इति क० घ० ।
(८) मध्येऽस्य यत्त्वपामिति क० घ० ।
(९) त्वपामिति क० घ० ।

---

(क) ऋ० ८, ९८, २ । (ख) ऋ० १, १६४, ५२ । (ग) ऋ० ६, ६१, २ ।
(घ) ऋ० ९, २१, ५ । (ङ) ऋ० १, ८३, ५ । (च) ऋ० २,२४,१४ ।
(छ) ऋ० १०, १५, ४ । (ज) ऋ० २, ३५, १४ । (झ) ऋ० २,१९,८ ।

पुष्यन् क्षितिं(१) पोषयति प्रणुदन् रश्मिभिस्तमः(२) ।
तेनैनमस्तौत् पूषेति भरद्वाजस्तु पञ्चभिः ॥६५॥
त्रीणि भान्ति रजांस्यस्य यत्पदानि तु तेजसा(३) ।
तेन मेधातिथिः प्राह विष्णु(क)रेनं(४) त्रिविक्रमम् ॥६६॥
हत्वा साय्यं पृथग्याति(५) भूतेभ्यस्तमसोऽत्यये ।
प्रकाशं किरणैः कुर्वंस्तेनैनं केचिन्न(ख) विदुः ॥६७॥
सम्प्रत्येकैकशस्त्वेनं(६) यन्मन्यन्ते पृथग्नराः ।
विश्वे(ग) विश्वानर(७)(घ) स्तेन कर्मणा स्तुतिषु स्तुतः ॥६८॥
सूर्ये(ङ)व कपिलो(८)(च) भूत्वा यथाक्रमधिरोहति ।
वृषाकपि(छ)रसौ तेन विश्वस्मादिन्द्र उत्तरः(ज) ।
रश्मिभिः कम्पयन्नेति वृषा वर्षिष्ठ(झ) एव सः ॥६९॥

---

(१) उद्यन् जगदिति क० घ० ।
(२) ततः इति ख० ।
(३) तेजसः इति क० घ० ।
(४) स्तमिति क० ख० घ० ङ० ।
(५) सौर्ये पृथक् तेऽपी इति क० घ० ।
(६) सा प्रत्येकशस्त्वेवेति क० घ० ।
(७) वैश्वानरः (घ) इति क० घ० ।
(८) सूर्येव कपिल इति क० घ०, सूर्यैककपिल इति ख० ग० ।

---

(क) ऋ० १,२२,१७ । (ख) ऋ० १,१०,२ । (ग) ऋ० १,३,७–९ ।
(घ) ऋ० १,१८६,१ । (ङ) ऋ० १,५८,६ । (च) ऋ० १,७,८ ।
(छ) ऋ० १०,२०,१६ । (ज) ऋ० १०,८६,१ । (झ) ऋ० ७,१९,१ ।
(ञ) ऋ० १,१०,६ ।

यायाक्षकाले भूतानि स्वापयन्नस्तमेति यत् ।
वृषाकपि(क)रितो(१) वा स्यादिति मन्त्रेषु दृश्यते ॥७०॥
त्रिषु धन्वे(ख)ति(२) चैन्द्रेण प्रत्युक्तो वारिषाकपे(३) ।
विष्णातेर्विशतेर्वा स्याद्वेवेष्टेर्व्याप्तिकर्म्मणः ।
विष्णुर्निरुच्यते वातः सर्व्वं सर्व्वान्तरश्च सः(४) ॥ ७१ ॥
पञ्च षड्विंशतिश्चैव यानि नामानि सप्त च ।
मध्यगाग्नीन्द्रसूर्य्याणां तान्युक्तानि यथाक्रमम् ॥ ७२ ॥
नैपातिकानां नाम्नां तु प्रागुक्तैर्नामलक्षणैः ।
सम्पन्नानां पृथक्त्वेन परिसङ्ख्या न विद्यते ॥ ७३ ॥
पार्थिवी(ग) मध्यमा(घ) दिव्या वागपि त्रिविधा तु या ।
तस्याः सूक्तानि नामानि यथास्थानं निबोधत ॥ ७४ ॥
यत्तन्नु भजते सूक्तमेता(५)नद्यः स्तुता(६)भुवि ।

---

(१) यतः इति पुस्तकान्तरं ।
(२) धावेतीति ग० त्रिषुधन्वेतीति ङ० ।
(३) वृषाकपे(ङ) इति ख० ।
(४) रश्मिभिः कम्पयन्नेतीत्यादि सर्व्वं सर्व्वान्तरश्च स इत्यन्तपाठः क० घ० पुस्तकयोर्नेष्यते ।
(५) ह्येषा इति क० घ०, एषा इति ख० ग० ।
(६) तदेति क० घ० ।

---

(क) ऋ० १०, २७, १६ । (ख) ऋ० १, १८, ७ । (ग) ऋ० ८, २५, ९ । (घ) ऋ० ६, २५, १ । (ङ) ऋ० १०, ८६, २०—२२ ।

यं वै वेन[१] भजन्त्यापो[२] यदा[३] चौषधयः सदा[४] ॥ ७५ ॥
अरण्यानी[क] च रात्री[ख] च श्रद्धा[ग] घोषाः[५][घ] सरस्वती ।
पृथिवी चैव नामैषा भूत्वा[६]द्यां च भजन्ति च[६] ॥ ७६ ॥
अग्नायी[च]नामतोऽप्येषा[७] भूत्वाग्नेयेषु[८] केषुचित् ।
स्तुता निपात[ङ]मात्रेण तत्र तत्रैव दृश्यते ॥ ७७ ॥
मध्ये सत्यदिति[ज]वाक्च[९] भूत्वा चैषा सरस्वती ।
समग्रं भजते सूक्तं त्रिभिरेव तु नामभिः ॥ ७८ ॥
एषैव दुर्गा भूत्वर्चं[झ] स्तुत्वा[१०] स्यात् सूक्तभागिनी[११] ।

---

(१) यदा चैनमिति क॰ ख॰ घ॰, यच्च वैनमिति ग॰ ।
(२) भवन्त्याप इति ख॰ ।
(३) तदेति क॰ घ॰ ।
(४) तथेति क॰ घ॰ ।
(५) चैषेति क॰ ख॰ घ॰ ।
(६) भूत्वा या भजते स्तुतीति क॰, द्यामजते स्तुतीति घ॰ ।
(७) अग्नायीका च नामैवेति क॰ घ॰ ।
(८) भूत्वाग्नेयीष्विति क॰ घ॰ ।
(९) वाक्यमिति क॰ घ॰, मध्यसत्यदितिर्वाक्चेति ख॰ ।
(१०) स्तुत्येति ङ॰ पुस्तकान्तरस्थ ।
(११) एषैव दुर्गा भूत्वर्चमिति श्लोकार्द्धं क॰ घ॰ पुस्तकयोर्न विद्यते।

---

(क) ऋ॰ १०,१४६,४। (ख) ऋ॰ १,११३,१। (ग) ऋ॰ ७,३२,१४।
(घ) ऋ॰ १,४६,१। (ङ) ऋ॰ १०,१५१,५। (च) ऋ॰ ५,४६,८।
(छ) ऋ॰ ४,५५,३। (ज) ऋ॰ १,४३,२। (झ) ऋ॰ ७,६६,११।

तन्नामानि य[१] मिन्द्राणी सरमा[क]रोमशो[ख]र्वशी[ग] ॥७९॥
भवत्पथ्या[घ]सिनीवाली[२][ङ] राका[च] चानुमतिः[३][छ] कुहूः ।
गौर्धेनुर्देवपत्न्योऽन्या[४] पथ्या स्वस्त्य[५] रोदसी ।
नैपातिकानि स्वभाञ्जि[६] येषां नामानि कानिचित् ॥८०॥
यदा तु वाग्भवत्येषा[७] सूर्य्याऽमुं लोकमाश्रिता ।
तदा सूक्तमुषा[८][ज] भूत्वा सूर्य्या[झ] च भजतेऽखिलम् ॥८१॥
वृषाकपाय्यृचं[ञ] भूत्वा सरण्यू[ट]र्द्वे च ते भुवम्[९] ।

---

(१) सूक्तार्धगीयमिति क॰ घ॰ । सूक्तार्धश्लोयमितिपाठो विशुद्ध ।

(२) भवत्स्वस्त्या(ठ)सिनीवालीति क॰ घ॰, भवत्स्वगन्या सिनीवालीति ख॰, भवत्यथ्या सिनीवालीति ग॰ ।

(३) राकोपानुमतिरिति क॰, राकोपानुमितिरिति घ॰, राका चानुमितिरिति पुस्तकान्तरम् ।

(४) गौर्गौर्धेनुपत्न्योऽन्या इति क॰ घ॰, देवपत्न्योऽन्या इति ख॰ पुस्तकान्तरञ्च ।

(५) स्वस्ति चेति ख॰,स्वस्तिश्चेति ग॰ ङ॰ पुस्तकान्तरञ्च ।

(६) नैपातिकान् पृथग्भाञ्जीति क॰ ।

(७) भजत्येवेति क॰ घ॰ ।

(८) सूक्तमुखेति ख॰ ग॰, तथा सूक्तमुपेति ङ॰ पुस्तकान्तरञ्च ।

(९) त्वेव तद्दृचमिति क॰ घ॰, ते भुवमिति पुस्तकान्तरम् ।

---

(क) ऋ॰ १, ६२, ३ । (ख) ऋ॰ १, १२६, ७ । (ग) ऋ॰ ५, ४१, १९ ।
(घ) ऋ॰ ३, ५४, ५ । (ङ) ऋ॰ ११, ३२, ८ । (च) ऋ॰ ११, ३२, ८ ।
(छ) ऋ॰ १०, ५९, ६ । (ज) ऋ॰ २, १८१, ६ । (झ) ४, ४४, १ ।
(ञ) ऋ॰ ७, ६६, ११ । (ट) ऋ॰ १०, १७, २ । (ठ) ऋ॰ ७,८१,४ ।

निपातमात्रं भजते द्यौश्च(१) पृथिवी सती ॥ ८२ ॥
सूर्य्यामिव(२) सतीमेतां गौरीं वाचं सरस्वतीम्।
पश्यामो वैश्वदेवेषु निपातेनैव केवलाः(३) ॥ ८३ ॥
घोषा(क) गोधा(ख) विश्ववारा(ग) पालोपनिषन्निषत्(४)।
ब्रह्मजाया(घ) जुहू(ङ)र्नामागस्त्यस्य(५)(च) स्वसाऽदितिः(छ) ॥ ८४ ॥
इन्द्राणी चेन्द्रमाता(६) च सरमा(ज) रोमशो(झ)र्वशी(ञ)।
लोपामुद्रा(ट) च नद्यश्च यमी(ठ) नारी च शश्वती(७)(ड) ॥ ८५ ॥
श्रीर्लाक्षा सार्पराज्ञी(८) वाक् श्रद्धा मेधा च दक्षिणा।
रात्री सूर्य्या(ढ) च सावित्री ब्रह्मवादिन्य ईरिताः ॥ ८६ ॥

---

(१) द्यविशु इति क० घ०, द्युवचेति ग०।
(२) पृथिवी त्विति क० घ०।
(३) केवलामिति क० घ०।
(४) पालोपनिषन्निषद् इति क० ख० घ० ङ०।
(५) छन्दोऽनुरोधात् नाम चागस्त्यस्येति पाठः समीचीनः।
(६) चन्द्रमातेति ख०।
(७) शश्वतीति क० घ०, तथैव चेति ख०।
(८) सार्व्वराज्ञीति ख०।

---

(क) ऋ० १०, ४०, ५। (ख) ऋ० ८, ६६, ८। (ग) ऋ० १, ४, ६।
(घ) ऋ० १०, १०९, २। (ङ) ऋ० १, ५८, ४। (च) १०, ६०, ६।
(छ) ऋ० १, ४३, २। (ज) ऋ० १, ६२, ३। (झ) ऋ० १, १२६, ७।
(ञ) ऋ० ५, ४२, १९। (ट) ऋ० १, १७९, ४। (ठ) ऋ०१०, १०, ९।
(ड) ८, १, ३४। (ढ) ऋ० ४, ४४, १।

नैवक: प्रथमस्त्वासां[१] वर्ग[२] स्तुष्टाव देवता ।
ऋषिभिर्देवताभिश्च समूहे[३]मध्यमो गण: ॥ ८७ ॥
आत्मनो भाववृत्तानि जगौ वर्गस्तथोत्तम ।
उत्तमस्य तु वर्गस्य य ऋषि: सैव[४] देवता[५] ॥ ८८ ॥
आत्मानमस्तौद्वर्गस्तु देवतां यस्तथोत्तम:[६] ।
तस्मादात्मस्तवेषु स्याद्य ऋषि. सैव[७] देवता ॥ ८९ ॥
संवादेष्वाह वाक्यं य: स तु तस्मिन् भवेदृषि.[८] ।
यस्तेनोच्येत वाक्येन देवता तच[९] सा भवेत् ॥ ९० ॥
उच्चावचेषु चार्थेषु निपाता: समुदाहृता: ।
कर्मोपसंग्रहणार्थे च[१०] क्वचिच्चौपम्यकारणात् ॥ ९१ ॥
जनानां पूरणार्थो वा[११] पादानामपरे क्वचित् ।

---

(१) तासामिति ख० ।
(२) वर्गा इति क० घ० ।
(३) समूहे इति क०, समुने इति ख० ।
(४) ऋषिश्चैव चेति घ० ।
(५) आत्मनो भाववृत्तानीत्यादि य ऋषि सैव देवता इत्यन्तपाठ क० घ० पुस्तकयोर्न विद्यते ।
(६) देवता चोत्तमस्तु य इति क० घ० ।
(७) आत्मस्तवेष्वेवं भवेद् सैवेति क० घ० ।
(८) भवत्यृषिरिति क० घ० ।
(९) तेष्विति क० घ० ।
(१०) कर्मोपसंग्रहणार्थेष्विति क० घ० ।
(११) पूरणार्थेष्विति क० घ० ।

मिताक्षरेषु ग्रन्थेषु पूरणार्थास्त्वनर्थकाः(१) ॥८२॥
कमीमिद्विति(२)विज्ञेया ये त्वनेकार्थकाश्च ते(३)।
इव न चित्तु चत्वार(४) उपमार्था भवन्त्यमी(५) ॥८३॥
उपमार्थे(६) मकारस्तु क्वचिदेव निपात्यते।
मिताक्षरेषु ग्रन्थेषु प्रतिषेधस्त्वनेकधा(७) ॥८४॥
इयन्त(८) इति सङ्ख्यानं निपातानां न विद्यते।
प्रयोजनवशा ह्येते(९) निपात्यन्ते पदे पदे ॥८५॥
उपसर्गास्तु विज्ञेयाः क्रियायोगेषु(१०) विंशतिः।
विशेषयन्ति ते ह्यर्था(११) नामाख्यातविभक्तिभिः(१२) ॥८६॥

---

(१) पूरणार्थं त्वनर्थकाः इति क० ख०।
(२) कामिमिद्वतीति ख०।
(३) त्वन्ये कार्थकाः स्मृता इति क० ख०।
(४) इवोनचिन्तुचत्वार इति ग०। इवेनचित्तुचत्वार इति ख०।
(५) भवन्ति ते इति ख० ग० घ०।
(६) उपमार्थे इति ग० घ०।
(७) त्वनल्पशः इति ख० ग० घ०।
(८) इयन्तु इति ख०।
(९) यथायु प्रकरणस्थैते इति ग० घ०। यथा प्रकरणस्थैते इति ख०।
(१०) क्रियायोगेनेति ख० ग० घ०।
(११) ते त्वर्थमिति ग० घ०। ह्यर्थानिति क०।
(१२) विभक्तिभिः इति घ०। विभक्तिषु इति ग० ग० घ०।

वाक्यजं व्यतिकीर्णञ्च निर्वाच्यं पञ्चधा पदम् ॥१०६॥
द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च ।
पञ्चमस्तु बहुव्रीहिः षष्ठस्तत्पुरुषः स्मृतः ॥१०७॥
विग्रहान्निर्वचः कार्यं समासेष्वपि तद्धिते ।
प्रविभज्यैव निर्ब्रूयाद्दण्डार्थो दण्ड्य इत्यपि ॥१०८॥
भार्य्या रूपवती चास्य रूपवद्भार्य्य इत्यपि ।
इन्द्रश्च सोमश्चेत्येवमिन्द्रासोमौ निदर्शनम् ॥१०९॥
शब्दरूपं पदार्थश्च व्युत्पत्तिः प्रकृतिर्गुणः ।
सर्व्वमेतदनेकार्थं दृशानवगमे गुणः ॥११०॥
सामान्यवाचिनः शब्दा विशेषे स्थापिताः क्वचित् ।
पलायने यथावृत्ति कौतुमर्या इतीर्य्यते ॥१११॥
विशेषवाचिनस्त्वन्ये सामान्ये स्थापिताः क्वचित् ।
हिमेनाग्निमिति मन्त्रे हिमशब्दो निदर्शनम् ॥११२॥
पदमेकं समादाय द्विधा कृत्वा निरुक्तवान् ।
दुरुषादः[क] पदं यास्को दृषे दृषे इति त्वृचि ॥११३॥
अनेकं सकृता चान्यदेकमेव निरुक्तवान् ।
अरुणो मासकृन्मन्त्रे मासकृद्विपदेन तु ॥११४॥
पदव्यवायेऽपि पदे एकीकृत्य निरुक्तवान् ।
गर्भं निधानमित्येते न जामय[ख] इति त्वृचि ॥११५॥
पदजातिरविज्ञाता स्वः पदार्थः स्वनामभि ।

---

(क) ऋ० १०, २७, २२। (ख) ऋ० १,२२,१९।

वाक्यजं व्यतिकीर्णञ्च निर्वाच्यं पञ्चधा पदम् ॥१०६॥
द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च ।
पञ्चमस्तु बहुव्रीहिः षष्ठस्तत्पुरुषः स्मृतः ॥१०७॥
विग्रहान्निर्वचः कार्यं समासेष्वपि तद्धिते ।
प्रविभज्यैव निब्रूयाद्दण्डार्हो दण्ड्य इत्यपि ॥१०८॥
भार्या रूपवती चास्य रूपवद्भार्य्य इत्यपि ।
इन्द्रश्च सोमश्चेत्येवमिन्द्रासोमौ निदर्शनम् ॥१०९॥
शब्दरूपं पदार्थश्च व्युत्पत्तिः प्रकृतिर्गुणः ।
सर्व्वमेतदनेकार्थे ह्यानवगमे गुणाः ॥११०॥
सामान्यवाचिनः शब्दा विशेषे स्थापिताः क्वचित् ।
पलायने यथाहन्ति कोनुमर्या इतीष्यते ॥१११॥
विशेषवाचिनस्त्वन्ये सामान्ये स्थापिताः क्वचित् ।
हिमेनाग्निमिति मन्त्रे हिमशब्दो निदर्शनम् ॥११२॥
पदमेकं समादाय द्विधा कृत्वा निरुक्तवान् ।
पुरुषादः(क) पदं यास्को वृचे वृचे इति त्वृचि ॥११३॥
अनेकं सन्तथा चान्यदेकमेव निरुक्तवान् ।
अरुणो मासकृन्मन्त्रे मासकृद्विग्रहेण तु ॥११४॥
पदव्यवायेऽपि पदे एकीकृत्य निरुक्तवान् ।
गर्भे निधानमित्येते न जामय(ख) इति त्वृचि ॥११५॥
पदजातिरविज्ञाता त्वः पदार्थः सिनामनि ।

---

(क) ऋ० १०, २७, २२। (ख) ऋ० १,२३,१६।

स्वरानवगमो धायि(क) वनेनेत्यृचि दर्शितः ॥११६॥
पुनःप्रेफं(ख) नराशंसं(ग) ह्याव्यानः पृथिवीति च ।
निरस्तेति प्रश्नतिस्वर्यादासीत् क्रमो यथा ॥११७॥
वर्णस्य वर्णयोर्लोपो बहूनां व्यञ्जनस्य च ।
अचाणीतिकपिर्नाभाद्(घ)नोधामित्यधास्तु च ॥११८॥
अर्थात् पदं स्वाभिधेयं पदाद्वाक्यार्थनिर्णयः ।
पदसङ्घातजं वाक्यं वर्णसङ्घातजं पदम् ॥११९॥
अर्थात् प्रकरणाल्लिङ्गादौचित्याद्देशकालतः ।
मन्त्रेष्वर्थविवेकः स्यादितरेष्विति च स्थितिः ॥१२०॥
इति नानान्वयोपायैर्नैरुक्तेयो यतेत यः ।
जिज्ञासुर्ब्रह्मणो रूपमपि दुष्कृत् परं व्रजेत् ॥१२१॥
यथेदमग्रे नैवासीदसदप्यथ वापि सत् ।
जज्ञे यथेदं सर्वं तद्भाववृत्तं वदन्ति तु ॥१२२॥
भावप्रधानमाख्यातं षड्विकारा भवन्ति ते ।
जन्मास्तित्वं परीणामो वृद्धिर्हानं विनाशनम् ॥१२३॥
एतेषामेव पश्चात्तु येऽन्ये भावविकारजाः ।
ते यथावाक्यमप्यूह्याः सामर्थ्यान्मन्त्रवित्तमैः ॥१२४॥
देवानाञ्च पितृणाञ्च नमस्कारैस्तथैव च ।
अथ व्यस्तं समस्तं वा शृणु व्याहृतिदैवतम् ॥१२५॥
व्याहृतीनां समस्तानां दैवतन्तु प्रजापतिः ।

(क) ऋ० १, १५८, ३ । (ख) ऋ० ५, २, ७ । (ग) ऋ० १, १३, ३ ।
(घ) ऋ० ६, ७, ६ ।

व्यस्तानामयमग्निश्च वायुः सूर्यश्च देवताः ॥१२६॥
वाग्दैवत्योऽथ वायैन्द्रो यदि वा परमेष्ठिनः ।
ओङ्कारो वैश्वदेवो वा ब्राह्मो दैवः क एव वा) ॥१२७॥
भावप्रधानमाख्यातं षट्प्रकारा भवन्ति तु ।
जन्मास्तित्वं परीणामो वृद्धिर्हानिर्विनाशनम् ॥१२८॥
एतेषामेव वर्णाः स्युरन्ये भावविकारजाः ।
यथावचनमभ्यूह्याः सामर्थ्यान्मन्त्रवित्तमैः ॥१२९॥
त्रीण्येव लोके लिङ्गानि पुमान् स्त्र्यथ नपुंसकम् ।
नामसूक्तप्रदेशेषु योज्यं प्रकरणं त्वतु ॥१३०॥
तेषां तु नामभिर्लिङ्गैर्यथर्थं सर्वनामभिः ।
कुर्वन्नामानि वै वाङ्गरन्यदेवत्यया यथा ॥१३१॥
यथेदमग्रे नैवासीदसदाप्यथवापि सन् ।
अग्रे यथेदं सर्वन्नु भावस्तत्तं प्रपद्यते ॥१३२॥
वाग्दैवत्योऽथ वायैन्द्रो यदि वा परमेष्ठिनः ।
ओङ्कारो वैश्वदेवो वा ब्राह्मो दैवः क एव वा ॥१३३॥
व्याहृतीनां समस्तानां दैवतं तु प्रजापतिः ।
व्यस्तानामयमग्निश्च वायुः सूर्यश्च देवताः ॥१३४॥

इति शौनकाचार्यकृतौ बृहद्देवतायामुपोद्घातप्रकरणम् ।

आग्नेयं प्रथमं सूक्तं मधुच्छन्दस आदितः[१]।
ज्ञेयास्त्वन्योऽन्यदेवत्या[२] स्तृचाः सप्तात उत्तराः ॥१२५॥
वायव्यः प्रथमस्त्वेषामैन्द्रवायव उत्तरः।
मैत्रावरुण आश्विन्य[३] ऐन्द्रो यः पञ्चमस्तृचः[४] ॥१२६॥
[५]नान्यः षष्ठादिद्वलिङ्गो गायत्रोऽन्त्यस्तु यस्तृचः[६]।
बहुदैवतमन्यत्तु[७] वैश्वदेवेषु मन्यते ॥१२७॥
सुषेदुवत्सौ[८]र्यायाते[क] गोतमेऽथ ऋजिश्वनि[ख]।
अवत्सारे[ग] परु[घ]च्छेपे[९] अत्रौ[१०] दीर्घतमस्यृ[ङ]षौ[११] ॥१२८॥

---

(१) आर्षकमिति ग० ङ०। घ० पुस्तकोऽत्रत्यपाठश्च।
(२) सर्वेऽन्यदेवत्या इति ग० ङ०। घ० उ०।
(३) मैत्रावरुणोऽयमाश्विन इति ख० ग० ङ०। घ० उ०।
(४) लिङ्गोक्तो वैश्वदेवत इति ख०। अप्यैन्द्रोऽन्यो वैश्वदेवक इति ग०ङ०।
(५) तन्नाना विश्वलिङ्गो नेति ग० ङ०। घ० उ०।
(६) गायत्रोऽन्त्यपरस्तृचः इति क० घ० च०।
(७) बहुदेवतमन्यस्त्विति क० घ०। बहुदैवत्यमन्यस्त्विति ग०।
(८) सुषेऽथ वात्से इति ग० ङ०। घ० उ०।
(९) परुच्छेपे इति ग०। अवत्सारपरुच्छेपे इति ख०।
(१०) पुत्रे इति ख० ग० ङ०। घ० उ०।
(११) तत् एषौ इति ख०।

---

(क) ऋ० १, ५१, ७। (ख) ऋ० ८, ४६, १०। (ग) ऋ० ५, ४४, १०।
(घ) ऋ० १०, १००, ५। (ङ) ऋ० १, १५८, ६।

8

वसिष्ठे नाभानेदिष्ठे[क] गये[ख] मेधातिथौ मनौ[ग]।
कक्षीवति[(घ)१] विहव्ये[ङ] च बह्वन्येषु चर्षिषु[२] ॥१३९॥
अगस्त्ये बृहदुक्थे[च] च विश्वामित्रे च[३] गाथिनि[छ]।
दृश्यन्ते विप्रवादाश्च[४] तासु तासु स्तुतिष्विह ॥१४०॥
यक्षीनो घर्षिरागच्छ यस्मिन्नन्ते प्रदृश्यते।
आचार्यौ यास्कशाण्डिल्यौ वैश्वदेवं तमाहतुः[५] ॥१४१॥
पादं वा यदि वार्धर्चमृचं वा सूक्तमेव वा।
वैश्वदेवं वदेत्सर्वं यत्किंचिद्बहुदैवतं[६] ॥१४२॥
ऋषिभिर्देवताः सर्वा विद्याभिः स्तुतिभिः स्तुताः।
संज्ञा तु निपातितानां[७] अर्थान्तरे निपातितम्[८] ॥१४२॥

---

(१) काक्षीवते इति ख० । कक्षीवते इति घ० ड० ।
(२) चर्षिषु इति ख० ग० ट० । घ० ड० ।
(३) विश्वामित्रेऽप्येति ख० ट० । घ० ड० ।
(४) विप्रपादाश्चेति क० घ० घ० ।
(५) तदाहतुरिति ग० ख० । घ० ड० ।
(६) बहुदेवतामिति क० घ० ।
(७) विश्वमित्रेषेति ख० ग० ख० । घ० ड० ।
(८) निपातितौ इति ख० । घ० ड० ।

---

(क) ऋ० १०,६१,१८। (ख) ऋ० ६,२,८। (ग) ऋ० १,३६,११।
(घ) ऋ० १,५१,१३। (ङ) ऋ० १,१०८,६। (च) ऋ० ३,३०,१०।
(छ) ऋ० १,८,१।

सारस्वतः सप्तमस्तु[१] एताः प्रउगदेवताः[२] ।
अविध्यमान ऊने वा प्रउगेष्वत आवपेत्[३] ॥१४४॥
सरस्वती तु द्विविधा ऋक्षु सन्दृश्यते स्तुता[४] ।
नदीवच्चैव वाग्वैव तयोवत्सुभयं स्मृतं[५] ॥१४५॥
[६]सुरूपकृत्नु[क]मित्यैन्द्रं सप्त पान्योऽन्यतः परं ।
पडाद्द[७] स्वधामिति मारुत्योऽनन्तरा ऋचः ॥१४६॥
एका वीलु[ख]चिदिन्द्राय[८] मरुद्भिः सह गीयते ।

---

(१) सारस्वतस्तु सप्तम इति ग॰ ङ॰ । घ॰ उ॰ ।
(२) सारस्वतस्तु उत्तरमष्टमा प्रउगदेवता इति ख॰ ।
(३) अविध्यमान इत्यादिश्लोकार्द्धं ख॰ ग॰ ङ॰ चिह्नितपुस्तकेषु नोपलभ्यते ।
(४) ऋक्षु सर्वासु सा स्तुतेति ग॰ ङ॰ । घ॰ उ॰ ।
(५) नदीवद्देवतावच्च सूत्राचार्य्यस्तु शौनक इति ख॰ । अत्र सूत्राचार्य्य इति ग॰ ङ॰ । घ॰ उ॰ ।
(६) इत॰ पूर्वं ख॰ ग॰ ङ॰ । घ॰ उ॰ चिह्नित पुस्तकेषु नदीवन्निगमा॰ घट्ते सप्तमो नेत्युवाच ह । अम्बेकाच दृषद्व्या चित्रद्दच सरस्वती । इयं शुष्मेभिरित्येतं मेने यास्कस्तु सप्तमम् । पञ्चैव सारस्वतस्यैता याज्या मैत्रायणीयके । प्राधान्याद्धविषः पञ्चम् वाच एवेतरोऽब्रवीत् । इत्यधिकं पठ्यते ।
(७) वषादह इति ख॰ यथादह इति घ॰ ।
(८) एकाविद्युचिमिन्द्रायमिति क॰ । एकाविद्युचिदिन्द्रायेति ख॰ । एकापीलुचिदिन्द्रायेति ग॰ । एकावालुचिदिन्द्रायेति ङ॰ ।

---

(क) ऋ॰ ३, ४, १ । (ख) ऋ॰ १, ६, ५ ।

तस्या एकान्तरायास्तु अर्धर्चन्यो[१]द्विदैवत ॥१४७॥
मरुद्गणप्रधानोऽयं हौन्द्रस्तु[२] विचिकित्सित ।
मन्दू[क][३]समानवर्चसौ[४] मन्दुनावाषवर्चसा ॥१४८॥
मन्दू इति[ख] प्रपश्यन्ति[५] येषामेष[६] द्विदैवत ।
एकदैवत्यमाम्नात्यो विज्ञेयाध्ययनात् पद[७] ॥१४९॥
रोदसी[ग] देवपत्नीनामथर्वाङ्गिरसे[घ] यथा[८]।
[९]मरुद्गणप्रधानेयमाचार्याणां स्तुतिर्मता ॥१५०॥
मरुद्गणप्रधानत्वादिन्द्रस्तु विचिकित्स्यते[१०] ।

---

(१) अर्धर्चोऽन्योद्विदैवत इति घ० ङ० । झ० ।
(२) हौत्य चेति ख० ग० । घ० ङ० । मरुद्गणप्रधानो हौत्य चेन्द्र इति छ० ।
(३) मन्दु इति ख० ।
(४) समानवर्चसमिति ग० । समानवर्चसा इति घ० ।
(५) मन्दू इति प्रपश्यन्तीति क० घ० छ० च० ।
(६) एवमेवेति ख० । येषामेवेति ग० छ० । घ० ङ० ।
(७) विज्ञायाध्ययनात्पदमिति ख० । विज्ञानाध्ययनात्पदमिति क० घ० छ० ।
(८) रोदसी इत्यादि श्लोकार्धं क० घ० ङ० चिह्नितपुस्तकेषु नोपलभ्यते ।
(९) मरुद्गणेति छ० ।
(१०) विचिकित्सिता इति ख० ग० । घ० ङ० ।

---

(क) ऋ० १, ६, ७ । (ख) ऋ० १ ६, ७ । (ग) ऋ० १, १६७, ५ ।
(घ) ऋ० १०, १२, १ ।

मरुद्गणं महेन्द्रस्य[१] समांशं सकलं विदुः[२] ॥१५१॥
अग्निमित्यग्निदैवत्यं पादस्तच्च द्विदैवतः[३] ॥
निर्मथ्याहवनीयार्थावग्निनाग्निः[४] समिध्यते ॥१५२॥
द्वितीये द्वादशर्चे तु प्रत्यृचं देवताः स्तुताः ।
स्तूयन्ते ह्यग्निना सार्द्धं तासां नामानि मे शृणु[५] ॥१५३॥
प्रथमायां स्तुतश्चेध्मो[क][६] द्वितीयायां तनूनपात्[ख] ।
नराशंस[ग] स्तृतीयायां चतुर्थ्यां स्तूयते त्विळः[घ] ॥१५४॥
बर्हि[ङ]रेव तु पञ्चम्यां द्वारो[च] दैव्यस्ततोऽन्यया[७] ।
नक्तोषासा तु सप्तम्यामष्टम्यां तु स्तुतौ[८] सह ॥१५५॥

---

(१) मरुद्गणमहेन्द्रस्येति ग॰ । मरुद्गणेनेन्द्रस्येति क॰ ख॰ घ॰ च॰ ।

(२) समासं शाकलं विदुरिति क॰ घ॰ च॰ ।

(३) पादस्तच्च द्विदैवत इति ग॰ छ॰ । घ॰ ङ॰ ।

(४) निर्मथ्याहवनीयार्थो अग्निनाग्निरिति क॰ घ॰ । निर्मथ्याहवनीयार्थेऽग्निनाग्निरिति च॰ ।

(५) श्रूयते देवताऽथासां नामानि शृणुते च न इति क॰ घ॰ च॰ ।

(६) समिद्धस्त्विति क॰ घ॰ च॰ ।

(७) अन्ययेति ख॰, अन्यथा इति च॰ ।

(८) सस्तुतौ इति ग॰, स स्तुतौ इति ङ॰ पुस्तकान्तरञ्च ।

---

(क) ऋ॰ १२, ४५, २ । (ख) ऋ॰ १, १३, २ । (ग) ऋ॰ १, १३, ३ ।
(घ) ऋ॰ १, १२८, १ । (ङ) ऋ॰ ३, ५३, १७ । (च) ऋ॰ ५, ५, ५ ।

दैव्या[क]विति[१] तु होतारौ नवम्यामृचि संस्तुतौ ।
तिस्रो देव्यो दशम्यां च ज्ञेयस्त्वष्टै[ख]व तु स्तुतः ॥१५६॥
एकादश्यां तु सूक्तस्य स्तुतिं[२] विद्याद्वनस्पतिम्[ग] ।
द्वादश्यां तु स्तुता देव्यो विद्यात्स्वाहाकृती[घ]रिह[३] ॥१५७॥
सूक्तेऽस्मिन् प्रत्यृचं यास्तु[४] देवताः परिकीर्त्तिताः ।
ता एव सर्वास्वाप्रीषु द्वितीयाया[५] विकल्प्यते[६]॥१५८॥
प्रैषैः सहैव चैतानि त्वेकादश प्रचक्षते[७] ।
यजुष[८] प्रैषसूक्तं वा ह्येतान्येतराणि तु ॥१५९॥
सौत्रामण्यां[९] तु चैषि प्राजापत्याश्वमेधिके ।

---

(१) दैव्याविति ख० ङ० ।
(२) स्तुतमिति ङ० ।
(३) देवी विद्यात्स्वाहाकृतीरितीति ग० ।
(४) प्रत्यृचे यास्त्विति क० ग० घ० ।
(५) द्वितीया त्विति ख० ।
(६) विकल्पते इति ख० ग० घ० ।
(७) प्रैषैः सहाप्रीसूक्तानि तान्येकादश सन्ति चेति ख० ग० ङ० । सहाप्री इत्यत्र सहैवेति ख० ।
(८) यजुष्प्रैति ख० ग० ङ० ।
(९) सौत्रामणीतीति क० ग० घ० ।

---

(क) ऋ० १, २७, १२ । (ख) ऋ० १, ३२, २ । (ग) ऋ० ६, ४८, १७ ।
(घ) ऋ० १, १८८, ११ ।

पुरुषस्य च यन्मेधे यजुःष्वेव तु तच्च च[१] ॥१६०॥
अत्रैव प्रैषसूक्तं स्याच्च यजुःष्वाद्रियेत तत्[२] ।
तेषां प्रैषकृतं[३] यच्च यच्च[४] दीर्घतमा जगौ ॥१६१॥
मेधातिथं[५] यदुक्तं च चौष्वेवोभयवन्ति तु ।
ऋषिर्गृत्समदो[क][६] यच्च वाध्यश्व[ख]स्तु[७] यदुच्यते ॥१६२॥
नराशंसवदत्रि[ग]स्तु[८] दद्दृशेऽय[९] यदौर्वशः ।
तनूनपादगस्त्यस्तु[१०] जमदग्नि[घ]स्तु[११] यज्जगौ ॥१६३॥
विश्वामित्र[ङ] ऋषिर्यश्च जगौ वै काश्यपोऽसितः[च] ।
मेधातिथेस्त्वृचां[१२] यास्तु प्रोक्ता द्वादश देवताः ॥१६४॥

---

(१) तानि षडिति ख० ग० ङ० ।
(२) यजुष्वादि येषु चेति क० घ० च० ।
(३) प्रैषगतं सूक्तमिति ग० ।
(४) यच्च तच्चेति ख०, यत्तु तच्चेति ङ० पुस्तकान्तरश्च ।
(५) मेधातिथेरिति ख०, मेधातिथाविति ग० ङ० पुस्तकान्तरश्च ।
(६) ऋषौ गृत्समदे इति ग० ङ० पुस्तकान्तरश्च ।
(७) वाध्यश्वे चेति ग० ङ० पुस्तकान्तरश्च ।
(८) चात्रेश्चेति ख० ग० ङ० पुस्तकान्तरश्च ।
(९) ददर्श चेति ख० ग० ङ० पुस्तकान्तरश्च ।
(१०) चेति ग० ङ० पुस्तकान्तरश्च ।
(११) वामदेवस्येति ग०, जामदग्न्यश्चेति ङ० पुस्तकान्तरश्च ।
(१२) ऋचः इति ख० ग० ङ० पुस्तकान्तरश्च ।

---

(क) ऋ० २, १६, ८ । (ख) ऋ० १०, ६६, ५ । (ग) ऋ० १, १३६, ९ ।
(घ) ऋ० ३, ५३, १५ । (ङ) ऋ० ३, ५३, ९ । (च) ऋ० १, ४६, १० ।

सम्पद्यन्ते यथाग्नीकाः[१] सम्पदं तां निबोधत ।
इध्मो[क]यः सोऽय[२]मेवाग्निरयं चौभो[ख][३] समिध्यते ।
भातेर्वैतत्कृतं[४] रूपं भातो[ग] चौभाः[५] समिध्यते[घ] ॥१६५॥

इति बृहद्देवतायां द्वितीयोऽध्यायः ।

---

(१) यथाग्निं वाः इति ख० ग० ङ० पुस्तकान्तरेषु ।
(२) सर्व्वमिति ख० ग० ङ० पुस्तकान्तरेषु ।
(३) चौभ्रः इति ग० ङ० पुस्तकान्तरेषु ।
(४) भ्रातेर्वैतत्स्तवमिति क० ग० ङ० घ० ।
(५) चौभ्रे इति ग० ङ० पुस्तकान्तरेषु ।

---

(क) ऋ० ८, ४६, २ । (ख) ऋ० ७, १, १६ । (ग) ऋ० ५, ६, ५
(घ) ऋ० ४, १५; ४ ।

## अथ तृतीयोऽध्यायः ।



तनूनपाद्यन्त्येव नाम्ना सोऽग्नुच्यते तनूः[१] ।
नपा[क]दिति प्रजामाहुरग्निस्तस्य[२] च सम्भवम् ॥ १ ॥
नराशंसस्त्विहैके तु[३] होदभिस्त्वाहुरध्वरे[४] ।
नराः शंसन्ति सर्व्वेऽस्मिन्नासीना इति वादिनः[५] ॥ २ ॥
तदाहुरग्निमेवाय[६] नराशंसोऽध्वरे लयम्[७] ।
नरैः प्रस्तुत आसीनैराहुश्च ऋत्विजो नराः[८] ॥ ३ ॥
इळा स्तिति कृतं रूपं ऋषिभिर्गतिकर्मणः[९] ।

---

(१) यच्छत्यसौ तनुमिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(२) अमुतोऽस्येति ख० ग० ङ० पुस्तकान्तरञ्च ।
(३) नराशंसमिहैके त्विति ख० ग० ङ० पुस्तकान्तरञ्च ।
(४) अग्निमाहुरथैतरे इति ग० ङ० पुस्तकान्तरञ्च ।
(५) वाऽध्वरे इति ग० ङ० पुस्तकान्तरञ्च ।
(६) एतमेवाहुरन्येऽग्निमिति ग० ङ० पुस्तकान्तरञ्च ।
(७) ह्ययमिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(८) चैवर्त्विजो नर इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(९) इडस्त्विषिकृतं रूपमीडेश्च स्तुतिकर्मणः इति ग० ङ० पुस्तकान्तरञ्च। इड इंत्यत्र इय, इंडेश इत्यत्र ईळोश्चेति ख०, स्तुतिकर्मणः इत्यत्र, गतिकर्मणेति च० ।

---

(क) ऋ० १, १४२, १ ।

द्रवावां(क)स्तेन चोक्ताग्निरिरिणा(ख)(१)गतिकर्मणा(२) ॥ ४ ॥
वर्हि(ग)रेवायमग्निस्तु सर्वं हि परिवृंहितम् ।
स्तवेन यः स्तुतौ(३) वाचश्चिद्येन परिवृह्यते(४) ॥ ५ ॥
द्वार(घ)स्तु(५) देव्यो याः प्रोक्ता विशेषां तास्तु यत्नतः ।
आप्रायी(ङ)मनुवर्त्तन्ते तथाग्नाय्यग्निमेव च(६) ॥ ६ ॥
अग्नौ ध्रुवं स्थितास्तास्तु(७) स्तूयन्ते चाग्निना(८) सह ।
प्राधान्यन्तास्तु चैवाग्नेः स्तुतिष्वथ(९)हविःषु च ॥ ७ ॥
नक्तोषासा(१०) च ये देव्यावाग्नेय्यावेव ते स्मृते ।

---

(१) इरिणेति ग०, ईरिणेति ङ० पुस्तकान्तरेषु ।
(२) वर्धिकर्म्मणेति ग०, वर्धिकर्म्मणेति घ०, वृद्धिकर्म्मणेति पुस्तकान्तरे ।
(३) यस्तुत इति ग० घ० पुस्तकान्तरेषु ।
(४) परिवृंहित इति ग० घ० ङ० ।
(५) द्वारश्चेति ख० ग० ङ० पुस्तकान्तरेषु ।
(६) आप्रायीमन्ववर्त्तन्त नाग्निं नाग्नाय्य एव चेति ख० ग० घ० ।
(७) ध्रुवास्थितास्तास्त्विति ख० ग० घ० ।
(८) संस्तूयन्तेऽग्निनेति ख० ग० ङ० ।
(९) स्तुतिष्वेवेति ग० ङ० पुस्तकान्तरेषु ।
(१०) नक्तोषाऽग्नौ इति ख० ग० ङ० पुस्तकान्तरेषु ।

---

(क) ऋ० ४, २, ५। (ख) ऋ० ८, ८७, १। (ग) ऋ० १, ५३, १०।
(घ) ऋ० १, १३, ६। (ङ) ऋ० १, २२, १२।

ग्रामाग्नेयी[१] हि कालस्य तस्यैवोषाः[क] कलैव तु[२] ॥ ८ ॥
तम उच्छत्यु[घ]षा नक्ता[ङ] नक्तोमां हिमविन्दुभिः ।
अपि वा[३] व्यक्तवर्णेति नञ् पूर्वां वे[च]रिदं[४] भवेत्[५] ॥ ९ ॥
नाम्ना भवत्युषा[६]श्चैव सैषा[७] प्रागुदयाद्रवेः ।
[८]षा हि वोषा[९] भवत्यादौ मध्ये प्रान्ते तमस्वती[१०] ॥ १० ॥
दैव्याविति[११] तु होतारावुभौ[१२] पार्थिवमध्यमौ ।

(१) माव्याग्नेयीति ख॰, ग्नावाग्नेयीति ग॰, ग्नाव्याग्नेयीति ङ॰ पुस्तकान्तरञ्च ।
(२) किला(ख)ऽवमे(ग)ति क॰ घ॰ च॰ ।
(३) अभि वेति ख॰ ।
(४) चेरिदमिति ख॰ ।
(५) तम उच्छत्युषेति श्लोक क॰ घ॰ च॰ पुस्तकेषु न दृश्यते ।
(६) उषाः इत्यत्र उषेति पाठ संगतः।
(७) श्चैवेति ख॰ ।
(८) ख॰ ग॰ ङ॰ पुस्तकेषु, वा हि वोषेति श्लोकार्द्धं, नाम्ना भवत्युषा चैवेति श्लोकार्द्धात् प्राक्, पठितं ।
(९) दोषेति क॰ घ॰ च॰ ।
(१०) निम्नोये सा तमस्विनीति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।
(११) दैव्याविती‍ति ख॰ ग॰ ।
(१२) अमौ इति ग॰ ङ॰ पुस्तकान्तरञ्च ।

(क) ऋ॰ १, ४६, १ । (ख) ऋ॰ १ ३२,४ । (ग) ऋ॰ ३, ५४, ५ ।
(घ) ऋ॰ १, ४६, १ । (ङ) ऋ॰ १, ०३, ० । (च) ऋ॰ १,७२, ८ ।

दिव्यादग्नेस्तु[१] जज्ञाते देव्यौ तेनैव जन्मना[२]॥ ११ ॥
तिस्रस्तु देव्यो याः प्रोक्तास्तिस्रानेवेह या तु वाक्।
त्रिविधेनोच्यते नाम्ना ज्योतिःषु त्रिषु वर्त्तिनी ॥ १२ ॥
अग्निमेवानुगेला[३] तु मध्ये त्वैन्द्री[४] सरस्वती।
अमुं श्रिताधिलोकन्तु[५] भारती भारतो स्तुभौ ॥१३॥
सैषा [illegible] त्रिविधा वै वाग्दिवि च व्योम्नि चेह च।
यस्ता [६]चैव समस्ता च भजतेऽग्नीनिमानपि[७] ॥१[illegible]
त्वष्टा [illegible] यः सोऽयमेव [८]पार्थिवोऽग्निरिति श्रुतिः[९]।
पार्थिवस्यास्य वर्ण्यः स्युः कस्याप्युक्[१०]वार्त्तवेषु च[११] ॥१५॥
त्विमित[क]स्तुष्टुमो वा स्यात् [१२]तूर्णमश्नुवतीति वा[१३]।

---

(१) चौति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(२) कथ्यत इति क॰ ख॰ ट॰ च॰।
(३) अनुगैलेति ख॰, अनुलेलेति क॰ घ॰ च॰।
(४) प्रातेति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(५) श्रितविलोकन्निति क॰ घ॰ च॰।
(६) यानेति क॰ घ॰ च॰।
(७) भजत्यग्नीनिमानन्निति क॰ घ॰ च॰।
(८) त्वयामेवेति ख॰ ङ॰ पुस्तकान्तरञ्च, यत् स्वयं प्रोक्त इति ग॰।
(९) स्तुतिरिति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(१०) काचावोदिति ख॰, कस्याएर्मिति ङ॰ पुस्तकान्तरञ्च।
(११) पार्थिवो वाप्यग्ने च कोत्सा विश्वत्तेवोषु चेति क॰ घ॰ च॰।
(१२) तुचिते का स्यादिति ख॰, त्वचतेर्वा स्यादिति ग॰ ङ॰ पुस्तकान्तरञ्च।
(१३) अमृत एव चेति ख॰ ग॰, वा इयत्र चेति ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ १॰, ८४, २।

कर्मसु त्वरणां वेत्ति [१]तेन नामैतद्[२]श्नुते ॥१६॥
यः सहस्तमोजस्तु [३]रवेश्चन्द्रमुपाश्रितः[४]।
सोऽयं[५] त्वष्टारमेवाग्निः [६]परं वन्दे च यन्मधु[७] [क] ॥१७॥
प्रादाद्ब्रह्मा च [८]सुप्रीतः पुत्राय[९] यदथर्वणे[१०]।
स चाभवदृषिस्तेन ब्रह्मणा वीर्यवत्तमः[११] ॥१८॥
तस्यपि[१२]र्निषिषेधेन्द्रो [१३]मैवं वोचः [१४]कथिन्मधु।
न हि मोक्षे मधुन्यस्मिन् जीवन्तं त्वोत्सृजाम्यहं[१५] ॥१९॥

---

(१) कर्मसुत्वरणो वेत्तीति ग० ङ०, वेत्तीत्यत्र वेत्सीति ख० पुस्तकान्तरञ्च।
(२) नाश्नुतेरिति ख०।
(३) सहस्तमो रश्मिरिति ग० ङ०।
(४) चन्द्रमसोऽश्रित इति क० घ० च०।
(५) सोऽप्यीति ख० ग० ङ० पुस्तकान्तरञ्च।
(६) अग्निमिति ग० ङ० पुस्तकान्तरञ्च।
(७) वेदवर्तं मनुमिति ख०, वेद च यन्मध्विति ग०, वेद च यन्मध्विति ङ०, देव च यन्मध्विति पुस्तकान्तरं।
(८) प्रपीति ख० ग० ङ० पुस्तकान्तरञ्च।
(९) सुतायेति ख० ग० ङ० पुस्तकान्तरञ्च।
(१०) तदथर्वेद्य इति ख० ग० ङ० पुस्तकान्तरञ्च।
(११) दीप्तिमत्तरः इति ख० ग० ङ० पुस्तकान्तरञ्च।
(१२) तं त्वृषिरिति क० घ० च०।
(१३) निषिषिधेन्द्र इति क० घ० च०।
(१४) मेदं वाचः इति क० घ० च०।
(१५) मधौ ब्रह्मन् जीवनं त्वहमुत्सृजे इति क० घ० च०।

---

(क) ऋ० १, ११४, १०।

तथैवं सोऽय(१)मेवाग्निर्भवतीति विनिश्चयः ॥२९॥
अयं कर्त्ता च देवानां (२)साक्षतिस्मामिन्द्रैकजा ।
अयं प्रसूतिर्भूतानां स तेषा(३)मयमव्ययः ॥२०॥
तनूनपा(क)द्द्वितीया स (४)नराशंस(ख)वती च या ।
समश्नुते (५)प्रयोकश्चे त्रिष्वेवोभयवत्स्विह(६) ॥२१॥
नराशंसवती वा स्या(७)द्द्वितीयेह (८)प्रजार्थिना ।
बलकामोऽथ वा यः स्या(९)द्भूरिमिच्छति वापि (१०)यः(११) ॥२२॥
आग्नेयमिति(१२) यत्त्वेभि(१३)र्वैश्वदेवमिहोच्यते ।

---

(१) स्वयमिति ग० घ० पुस्तकान्तरेषु ।
(२) अयं हि कर्त्ता स्थावराणामिति ख० ग० घ० पुस्तकान्तरेषु ।
(३) सर्वेषामिति ख० ग० घ० पुस्तकान्तरेषु ।
(४) चेति ख० ग० घ० पुस्तकान्तरेषु ।
(५) समश्नुते इति ख० ग०, समर्थ्येते इति घ० पुस्तकान्तरेषु ।
(६) उभयवस्त्विति ग०, उभयवत्सु त्विति घ०, उभयवत्सु चेति पुस्तकान्तरं ।
(७) स्यात्विति ग० घ० ।
(८) चेति ख० ग० घ० पुस्तकान्तरेषु ।
(९) अन्नकामो वेति ख० ग० घ० पुस्तकान्तरेषु ।
(१०) भूतिमिच्छेद्यापीति ख० ग० घ० पुस्तकान्तरेषु ।
(११) वेति ग० ।
(१२) आग्नेयं ग्राह्यमिति ख० ग० पुस्तकान्तरेषु, आग्नेये ग्राह्यमिति घ० ।
(१३) ग्राह्यमेभिर्दर्शितेति ख० ग० घ० पुस्तकान्तरेषु ।

---

(क) ऋ० १, १८८, २ । (ख) ऋ० १, १४२, ३ ।

एकादश्या तु नासत्यौ(क) द्वादश्याग्निमिम पुनः ।
पृथक् पृथक् स्तुतौ त्वन्तु सूक्तमाह रथीतरः(१) ॥४०॥
बहुदेवे द्विदेवे(२) वा गुणैर्वा(३) यत्र कर्मजे ।
श्रूयते देवतैकैका विभक्तस्तुति(४) तद्विदुः ॥४१॥
वैश्वदेवानि सूक्तानि त्रिविधानि भवन्ति तु ।
सूर्यसत्यवयुक्तं विश्वलिङ्गं पृथक्स्तुति(५) ॥४२॥
पृथक्स्तुति तु यत्प्रोक्तं तद्विद्यात्(६)बहुदैवतम् ।
विश्वलिङ्गन्तु तद्यत्र विश्वे स्तौ कर्मजैर्गुणैः(७) ॥४३॥
विश्वानुद्दिश्य यद्देवान् स्तौति(८) सूर्य्यमनेकधा ।
देवानेवा(९)भिसंस्तौति तं प्राहुः सूर्य्यसंस्तवम् ॥४४॥
न तु भागोऽस्यसूक्तादौ(१०) न सूर्य्ये सौषधेषु वा(११)।

---

(१) रथान्तर इति ख०।
(२) बहुदेवतद्वन्द्वे इति क० ग० घ०, बहुदेवते द्वन्द्वे इति ख०।
(३) गुणे वैरिति क० ग० घ०।
(४) देवतैककामभक्तिस्तुतीति क० ख० ग० घ०।
(५) पृथक् स्तुतीति निर्विसर्गान्तपाठः समीचीनः।
(६) यद्विद्यादिति क० ग० घ०।
(७) कर्म्मभिः स्तुत इति क० ग० घ०।
(८) देवांस्तु यत्रेति क० ग० घ०।
(९) देवैरेवेति क० ग० घ०।
(१०) भागस्य सूक्तादाविति ख० ग० ङ० पुस्तकान्तरञ्च, भागो स्वसूक्तादाविति घ०।
(११) सूक्तेष्वेवौषधेषु वेति ग०, सूक्तेष्वेवौषधेषु वेति ख०।

---

(क) ऋ० १०, २४, ५।

यद्धेतुमप्यनड्रुहो(१) वोढा दोग्ध्रायुरेव वा ॥५०॥
भागेयः स्तौति चाम्यादीन्मित्रादीनथसंस्तुतौ(२) ।
यद्देभिरिति चैतस्मिन् वैश्वदेवेऽग्निमर्चति ॥५१॥
तदाक्षरादावन्ते च प्रायशोऽन्यां स्तवन्नृषिः(३) ।
प्रातर्योगात्(क)(४) प्रपन्नाद्वा स्तौत्यन्यामपि देवताम् ॥५२॥
यस्यां वदत्यर्थवादान्(५) सा ज्ञेया सूक्तभागिनी ।
यान्तु स्तौति प्रसङ्गेन सा विज्ञेया निपातिनी ॥५३॥
यत्तूक्तां भण्यते(६) चास्मिन् सूक्ते वै(७) सूक्तभागिनी ।
यस्मिन् सर्वांस्तु राजर्षीनृषीन् वापि स्तवन्नृषिः ॥५४॥
मेधातिथिरगस्त्यस्तु(८) बृहदुक्थो मनुर्गयः(ख) ।
ऋजिश्वा(ग) च सुकक्षश्च शार्यातो(घ) गोतमो मुनः(९) ॥५५॥

---

(१) यद्धेतुः साध्यस्वाहाविति क० पुस्तकान्तरञ्च ।
(२) चाश्वसंस्तुताविति क० ख० ग० घ० ।
(३) अन्याः स्तुवन्नृषः इति ग० ङ० पुस्तकान्तरञ्च ।
(४) प्रतियोगादिति ग० ङ० पुस्तकान्तरञ्च ।
(५) वदन्त्यर्थवादाः इति क० ग० घ० ।
(६) न तु व्याहन्यते इति क० ग० घ० ।
(७) वेति ग० ।
(८) चेति ख० ङ० ।
(९) मानवो यमः इति ख० ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १०, ४१, २ । (ख) ऋ० ६, २, ८ । (ग) ऋ० ५, २९, ११
(घ) ऋ० ३, ५१, ७ ।

अपीनृषिर्वा स्तौति दध्यङ्मेऽस्या-
मात्मानं वा तेषु यं मन्यजन्म[1] ।
तस्मादस्या विमवदन्ति केचित्
इन्द्राग्नी सख्या तु[2] निपातभाजौ ॥१०॥

दावुचथ्य[क]बृहस्पती ऋषिपुत्रौ बभूवतुः ।
आसीदुचथ्यभार्या तु ममता नाम भार्गवी ॥११॥
तां यवीयान्[3] बृहस्पतिर्मैथुनायोपचक्रमे ।
शुक्रस्योत्सर्गकाले तु गर्भस्य प्रत्यषेधत[4] ॥१२॥
इहास्मि पूर्वसम्भूतो न कार्यः शुक्रसङ्करः ।
तच्छुक्रप्रतिषेधं तु न ममर्ष बृहस्पतिः[5] ॥१३॥
स व्याजहार तं गर्भं तमस्ते दीर्घमस्त्विति ।
स च दीर्घतमा नाम बभूवर्षिरुचथ्यजः ॥१४॥
स जातोऽभ्यतप[6]ल्लोकानेतस्मा[7]दन्धतां गतः ।

---

(१) यथापन्नीव स्तौति ग्रास मन्येति ख० ग० घ० । यथापन्नीव इन्द्र ऋषमेवापन्नीवः इति म० ।
(२) केचिदैन्द्री सैवेति ख० ग० घ० ।
(३) कनीयानिति ख० ग० घ० ।
(४) प्रत्यभाषतेति ख० ग० घ० च० ।
(५) तं शुक्रप्रतिषेधात् तु बृहस्पतिरमर्षयदिति ग० ।
(६) अभ्यतपदिति ख० घ०, अभ्यवददिति ग० घ० पुस्तकान्तरम् ।
(७) एतस्मादिति ख० ग० घ० ।



---

(क) ऋ० ८, ४६, ५८ ।



मैत्रावरुणं सुसुमे(क)ति सूक्तं(१)
प्रप्र(ख)वोष्यं वैश्वदेवं द्वितीयं(२) ।
एतत्सूक्तं(३) वैश्वदेवं तृतीयं
वैश्वदेवं स्या(४)द्बहुदेवतेषु ॥७॥
बहुशस्तु वैश्वदेवेषु संस्तवः(५)
अर्धर्चा(६) द्वैपदास्त्रैपदाश्च ।
द्विप्रधाना अपि चैकप्रधाना
बहुप्रधाना अपि वैश्वदेवाः(७) ॥८॥
वैश्वदेवी मित्रावरुणी द्वितीया
तिस्रोऽश्विभ्यां तत ऐन्द्री ततोऽग्नेः ।
मारुत्येका तत ऐन्द्राग्न्यनन्तरा
बार्हस्पत्या चोत्तमा कीर्ति देवान् ॥९॥

---

(१) सुसुमेतीदं सूक्तमिति ख०, ग० ङ० पुस्तकान्तरञ्च ।
(२) तृतीयमिति क० ख० घ० ।
(३) एतत्तु त्रीण्यदिति ग० ।
(४) वैश्वदेवं हि स्यादिति ङ० ।
(५) सम्पृष इति क० ख० घ० ।
(६) अर्धर्चाविति क० ख० घ० ।
(७) अपि ता वैश्वदेव्यः इति ग० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, १३०, ८ । (ख) ऋ० १, ३०, ७ ।

जीर्णन्तु दीर्घतमसं खिन्नास्तत्परिचारिणः(१) ।
दासा अथ(२) नदीतोये दृष्टिहीनमुपादधुः(३) ॥२१॥
तत्रैकस्त्रैतनो(४)(क) नाम शस्त्रेणैनमपाहनत् ।
शिरस्त्वांसावुरश्चैव स्वयमेव न्यकृन्तत(५) ॥२२॥
अङ्गदेशसमीपे तु नद्यः सर्वाः समुत्क्षिपन्(६) ।
(७)जनयामास चोत्थाय(८) कक्षीवत्प्रमुखानृषीन् ॥२३॥

---

(१) तत्परिचारका इति ख० ङ० पुस्तकान्तरे च।
(२) दासा बध्वेति क० घ० च०।
(३) उपादधुरिति क० घ० च०।
(४) त्रैतन इति क० घ० च०।
(५) ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—
हत्वा दीर्घतमास्तु पापेन महता वृतम् ।
आत्माङ्गान्यनुरश्चैव ततोऽदान्मोहितो भ्रमम् ॥
इत्यधिकं पठितम्।
(६) तं न्दयं समुदक्षिपदिति ङ० पुस्तकान्तरे च।
(७) जनयामास चोत्थायेति श्लोकार्द्धाभावः, ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—
अङ्गराजमहिषे युक्ता सुदेष्णा पुत्रकाम्यया ।
राज्ञा च प्रहिता दासी भर्त्रा मत्वा महातपाः ॥
इत्यधिकं पठितम्।
(८) सोऽजीजनद्ध्यसैकादिति ख० ङ० पुस्तकान्तरे च।

---

(क) ऋ० १,।१५८,५।

ददुर्देवा सुता नेने ततोऽनन्यो बभूव स[1] ॥१५॥
स वैदिषद् इत्यस्तौ[2] चतुर्भिर्जातवेदसं ।
समिद्ध आप्रियोऽन्त्यैन्द्री तमित्यग्नेः पराणि षट्[3] ॥१६॥
स्तुतौ तु मित्रावरुणौ सूक्तैर्मित्रमिति त्रिभिः ।
मित्रं मैत्री वदत्येता[4] माधेनवस्य शंसति ॥१७॥
अदितिं चाथ वाय्वग्निं तथा रूपं हि दृश्यते ।
अग्निं मेने दितिं त्वेव कुत्से चेह[5] च शौनकः ॥१८॥
ऋषिरत्र प्रसङ्गाद्वा दर्शनादानुकीर्तयेत्[6] ।
विष्णोर्नुकमिति त्रीणि वैष्णवानि पराण्यतः ॥१९॥
सवः पान्तं चतुर्भिस्तु[7] इन्द्राविष्णू सह स्तुतौ ।
स्तवाणि वा वैष्णवानि ऋषिस्त्वेनृषि[8] कांक्षति ॥२०॥

---

(१) तु तस्मात्सो मेने न त्वन्यतः गत इति क॰ ख॰ ग॰ ।
(२) इत्यवैदिति ख॰ ।
(३) स्वाधः षडैन्द्री षड्भिः त्वग्निं तमित्यत इति क॰ ख॰ ग॰, आप्रि-योऽन्त्यैन्द्री माहावाग्ने पराणि षेति ग॰ ।
(४) मैत्रीत् देवतामिति ख॰ ।
(५) सारवः कुत्सो वेदेति ङ॰ पुस्तकान्तरञ्च ।
(६) ऋषिरथैः प्रसङ्गाद्दृष्टोऽनुकीर्तयदिति ख॰ ।
(७) इदयान्तञ्चभिर्वृंस्विति ग॰, तावा चतुर्भिर्वृंस्विति घ॰ पुस्तकान्तरञ्च ।
(८) स्तवाणि ऋषिरिति ग॰ ङ॰ पुस्तकान्तरञ्च ।

जीर्णन्तु दीर्घतमसं खिन्नास्तत्परिचारिणः(१) ।
दासा अथ(२) नदीतोये दृष्टिहीनमुपादधुः(३) ॥२१॥
तत्रैकस्त्रैतनो(४)(क) नाम शस्त्रेणैनमपाहनत् ।
शिरश्चांसावुरश्चैव स्वयमेव न्यकृन्तत(५) ॥२२॥
अङ्गदेशसमीपे तु नद्यः सर्वाः समुत्क्षिदन्(६) ।
(७)जनयामास चोत्थाय(८) कक्षीवत्प्रमुखानृषीन् ॥२३॥

---

(१) तत्परिचारका इति ख० ङ० पुस्तकान्तरञ्च ।

(२) दासा बध्वेति क० ग० घ० ।

(३) अवादधुरिति क० ग० घ० ।

(४) त्रैतनः इति क० ग० घ० ।

(५) ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—

हत्वा दीर्घतमाख्यं तु पापेन महता वृतम् ।
आत्माङ्गान्यशुरश्चैव ततोऽदाम्भोहितो भ्रमम् ॥

इत्यधिकं पठितम् ।

(६) तं प्लवं समुदक्षिपदिति ङ० पुस्तकान्तरञ्च ।

(७) जनयामास चोत्थायेति श्लोकार्द्धात्प्राक्, ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—

अङ्गराजमहिषी युक्ता सुप्रजं पुत्रकाम्यया ।
राज्ञा च प्रहिता दासी भक्त्या मत्वा महातपाः ॥

इत्यधिकं पठितम् ।

(८) सोऽजीजनदृषसैकादिति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १,१५८,५ ।

तुष्टाव चैव सूक्ताभ्या[1]मनोधीत्यश्विनावृषिः ।
प्रेति द्यावापृथिव्यौ तु[2] पराभ्यामेतदुत्तर ॥२४॥
किमार्भवं पर[3] माग्नो मेध्यस्यास्य सस्तव ।
ईर्मा[क]न्ता स इति त्वश्वं नीयमानं प्रशंसति ॥२५॥
स्तूयमानास्तु चैवाश्व बहव संस्तुता यथा ।
नियुक्ताश्चानियुक्ताश्च प्रसङ्गादनुकीर्त्तिता. ॥२६॥
सजग्धवदप्यत्र हविष्य[ख] चाह सूनवे[4] ।
तस्मिन्मांसस्य सूनस्य चतुर्धा हविषस्तथा[5] ॥२७॥
वासोऽधिवाससोश्चाथ स्वधिते[ग]श्च प्रकीर्त्तनं[6] ।
मात्रश्शूलस्य पात्रा[घ]णां[7] स्वधितेश्च प्रकीर्त्तनं[8] ॥२८॥

---

(१) चेति सूक्ताभ्यामिति ङ० पुस्तकान्तरेषु ।
(२) द्यावापृथिव्यातेति ङ० पुस्तकान्तरेषु ।
(३) परे इति ङ० पुस्तकान्तरेषु ।
(४) भविष्य चाह भूतवत इति ख० ङ० पुस्तकान्तरेषु ।
(५) चतुर्थी हविषस्तथेति ग०, तस्मीनस्य च मांसस्य चतुर्धा च विधा नाथेति ङ० पुस्तकान्तरेषु ।
(६) यदिमस्याथ कीर्त्तितमिति ख० ग०, वासाधिवाससोश्चाथ यज्ञीयस्य च कीर्त्तनमिति ङ० ।
(७) मात्रसूक्ष्मपात्राणामिति ख० ङ० ।
(८) क० घ० च० चिह्नितपुस्तकेषु, मात्रशूलस्य पात्राणामिति श्लोकार्द्धं न पठितम् ।

---

(क) ऋ० ७, २०, २ । (ख) ऋ० १, १६२, ४ । (ग) ऋ० १, १६२, १८ । (घ) ऋ० ५, ६२, ७ ।

भागस्य(१) कीर्त्तनं चात्र इन्द्रापूष्णोः सह स्तुतिः(२) ।
सूक्तं यदस्य(३) वामीयं वैश्वदेवं तदुच्यते ॥२९॥
प्रवादा विविधास्तत्र देवानां चात्र कीर्त्तनं ।
अग्निस्तु वामः पलितो(क) वायुर्भ्राता तु मध्यमः ॥३०॥
घृतपृष्ठ(ख)स्तृतीयोऽत्र(४) सप्त वै रश्मयस्तु ताः ।
परास्तु कथयन्नग्निं(५) यथा वर्षति पाति(६) च ॥३१॥
अहोरात्रदिना(७)न्मासानृतूंश्च परिवर्त्तनं(८) ।
पञ्चधा त्रिविधा(९) चैव षोढा द्वादशधैव च(१०) ॥३२॥
संवत्सरं चक्रवच्च पराभिः कीर्त्तयन्नृषिः ।

---

(१) भागस्येति ग० घ०
(२) इन्द्रापूष्णोश्च कीर्त्तनमिति ख० ग० ।
(३) यदस्येति ग० ।
(४) तृतीयोऽस्य इति ग० ।
(५) चाग्निरिति ग० ।
(६) वातीति ख० ग० ।
(७) अहोरात्रान् दिनानिति ग० ।
(८) पर्याय परिकीर्त्तनमिति ग० ।
(९) पञ्चधा च त्रिधेति ख० ग० ।
(१०) द्वादशधापि चेति ग० ।

---

(क) ऋ० १, १६४, १ । (ख) ऋ० १, १६४, १ ।

क्षेत्रज्ञानं(१) च धेनुञ्च गौरीं वाचं सरस्वतीं ॥२३॥
धर्मं पूर्व्वयुगीयञ्च(२) साध्यान् देवगणांस्तथा ।
विविधानि च कर्म्माणि त्वग्निवायुविवस्वताम् ॥२४॥
विभूतिमग्नेर्वायोश्च जगतीं स्थान(३)सङ्क्रमे ।
भरणं रश्मिभिश्चैव(४) विसर्गं(५) पुनरेव च ॥२५॥
कर्म्मानुकीर्त्तनञ्चाथ(६) पर्ज्जन्याग्निविवस्वतां ।
मातापुत्रौ तु वाक्प्राणौ माता वागितरः सुतः ॥२६॥
सरस्वन्तमिति प्राणा(७) वाचं प्राज्ञः सरस्वतीं ।
शरीरमिन्द्रियैर्युक्तं क्षेत्रमित्यभिधीयते ॥२७॥
वेद तत्त्वाच(८) एवैकस्तस्मात् क्षेत्रज्ञ उच्यते ।
मेघः(९) शक[क] स्तस्य धूमः(१०) सलिलं वाय एव वा ॥२८॥

---

(१) क्षेत्रज्ञानमिति ग०, क्षेत्रं ज्ञानमिति ङ० ।
(२) पूर्व्वयुगमानाद्येति ख० ङ०, धर्म्मपूर्व्वयुगौ पद्येति ग०,
(३) जगति स्थास्विति ख० ङ० ।
(४) वादः इति ख०, वादामिति ख० ।
(५) विसर्पमिति ख० ।
(६) चाप्येति ख० ङ० पुस्तकान्तरेषु ।
(७) प्राणः इति क० ग० घ० च० ।
(८) वेत्त्येतत्तस्य इति ङ० ।
(९) मेघे इति ख० ।
(१०) धूमे इति ख० ।

---

(क) ऋ० ८, ८०, १ ।

सोम उक्ता[क]भवन्त्यस्य पावकाश्च त्रयोऽधिपाः ।
गौरीरं तं वैश्वदेवमुपरि स्यात्पृथक् स्तुतिः ॥३९॥
इन्द्रं मित्रमिमौ सौर्य्यौ सौरी चान्या सरस्वते[१] ।
मारुतेन्द्रस्य संवादः कयेति[२] परमः स्मृतः[३] ॥४०॥
मरुतामयुज[४]स्त्वैन्द्र्यो युग्माः सर्व्वाः[५] सहान्यया ।
एकादशी प्रथमा च मारुतस्तु च उत्तमः[६] ॥४१॥
इयमस्येव तु तत्रोक्तं कर्तृत्वमितरस्य तु ।
इतिहासं पुरावृत्तमृषिभिः परिकथ्यते[७] ॥४२॥
समागच्छन्मरुद्भिस्तु[८] चरन् व्योम्नि शतक्रतुः ।

---

(१) क० ख० ग० घ० पुस्तकेषु, मेघः प्रकृतस्य धूम इत्यादि सौरी चान्या सरस्वते इत्यन्तपाठो न विद्यते, तेषु च तत्र स्थाने,—
सूक्तमव्यक्तरूपं लिङ्गस्थानमेव प्रशंसति ।
प्रवादकृद्भवत्यापि ततः सलिलमुच्यते ॥
इति पाठो वर्त्तते ।
(२) कयेतीति ख० ।
(३) ततः इति ख० ग० ।
(४) मरुतः इति ग० ।
(५) सर्वेति ग० ।
(६) उत्तरः इति ग०, मारुत्यन्तिम उत्तरा इति ङ० पुस्तकान्तरेषु ।
(७) इयमस्यैव तु तत्रोक्तमित्यादि ऋषिभिः परिकथ्यते इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेक्ष्यते ।
(८) चेति ख० ग० ।

---

(क) ऋ० १, १६५, १ ।

मुदा तुष्टाव तानिन्द्रस्तेनेन्द्र(१)मृषयोऽब्रुवन् ॥४३॥
तेषामगस्त्यः संवादं तपसा वेद(२)तत्त्वतः ।
स तानभिजगामाशु निरूप्येन्द्रं हविस्तदा ॥४४॥
मरुतश्चाभितुष्टाव सूक्तैस्त्वादिति च(३) त्रिभिः(४) ।
मरुद्भिरिति चैवेन्द्रं स्वस्त्वमिति चैतया(५) ॥४५॥
निशम्य तद्धविश्चैन्द्रं मरुद्भ्यो दातुमिच्छति(६) ।
विज्ञायावेक्ष्य तद्रूपं खिन्नो(७) नेति तमब्रवीत्(८) ॥४६॥
न श्वो नाद्यतनं ह्यस्ति वेद कस्तद्यदद्भुतं ।
कस्यचित्तस्य संचारे(९) चित्तमेव विनश्यति ॥४७॥
किन्न इत्यब्रवीदिन्द्रमगस्त्यो भ्रातरस्तव ।
मरुद्भिः सम्प्रकल्पस्व(१०)वधीर्मा च(११) शतक्रतो ।४८॥

---

(१) ते चैन्द्रमिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(२) तपसावोधीति ख० ङ० पुस्तकान्तरञ्च ।
(३) त्वमिति लिति ख० ग० घ० ।
(४) वम्मिति पञ्चभिरिति ग० ।
(५) मरुद्भिरित्यनेनैन्द्रं सततं स महाप्यदमिति ख० ङ० पुस्तकान्तरञ्च ।
(६) इच्छयेति ख०, इच्छतः इति ङ० पुस्तकान्तरञ्च ।
(७) तद्भावमिन्द्र इति ख० ङ० पुस्तकान्तरञ्च ।
(८) ततोऽब्रवीदिति ख० ङ० पुस्तकान्तरञ्च ।
(९) तथसञ्चारे इति [redacted]० ङ० पुस्तकान्तरञ्च ।
(१०) सम्यक्कल्पस्वेति ख० ङ० ।
(११) मा नः इति ख० ङ० पुस्तकान्तरञ्च ।

किं नो भ्रातरिति त्वथामिन्द्रो मान्यमुपालभत् ।
श्रगस्त्यस्त्वरमित्यथा युञ्ज[१]मिन्द्र प्रयामयत्[२] ॥४८॥
प्रादात्सवनन[३] कृत्वा तेभ्य एव च तद्धविः ।
पूर्व्वया मान्त्वयन्निन्द्रो ह्यगस्त्य स्तेहकाम्यया ॥५०॥
एव सवनन कृत्वा प्रादात्तेभ्य स तद्धवि[४] ।
सुते[५] चकार सोमे च[६] तानिन्द्र. सोमपीथिन[क] ॥५१॥
तस्मादिद्याचिपातेन[७] ऐन्द्रेषु[८] मरुतस्तु तान्[९] ।
प्रीतात्मा पुनरेवर्षिस्तांस्तुष्टाव पुन पृथक्[१०] ॥५२॥
मरुतः प्रेति सूक्ताभ्या[११] मिन्द्र षड्भि. परैस्तु स[१२] ।

(१) कृद्धमिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(२) प्रसादयदिति ख॰ ङ॰ प्रसाधयदिति पुस्तकान्तरम् ।
(३) सङ्गमनमिति क॰ ग॰ घ॰ च॰ ।
(४) पूर्व्वया सान्त्वयन्निन्द्र इत्यादि स तद्धविरित्यन्तपाठ, क॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते ।
(५) सूते इति ग॰ ।
(६) सोमेऽप्येति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(७) निपातेष्विति ङ॰ पुस्तकान्तरञ्च ।
(८) मन्त्रेष्विति ख॰ ।
(९) मरुत स्तुता इति ङ॰ पुस्तकान्तरञ्च ।
(१०) पृथक् पृथगिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(११) प्रतिसूक्ताभ्यामिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(१२) गायन् षड्भि प्रभीपतिरिति ख॰ ङ॰ पुस्तकान्तरञ्च ।

(क) ऋ॰ १०, १६, ८ ।

ऋतुस्नाता[१] ऋषेर्भार्या लोपामुद्रा यशस्विनी ॥५३॥
उपमन्त्रयितुमारेभे रह संयोगकाम्यया ।
ताभ्यां सा ऽब्रवीदृग्भ्यां पूर्वीरिति चिकीर्षितं ॥५४॥
रिरंसुस्तामथागस्त्य उत्तराभ्यामतोषयत् ।
विदित्वा तपसा सर्वं तयोर्भावं रिरंसतो ॥५५॥
उक्तेन[२] कृतवानस्मिन्[३] ब्रह्मचार्य्युत्तमे जगौ ।
प्रसन्न[४] तौ परिष्वज्य गुरू मूर्ध्न्यवजिघ्रत ॥५६॥
स्निग्धेनमाचतुर्थोभावनागा ऋषि[५] पृथक् ।
युवो[क]रजांसीति तत सूक्तं पञ्चभिरश्विनौ ॥५७॥
अगस्त्य एव तुष्टाव सूक्तेन कतरे तुष[६] ।
द्यावापृथिव्यौ सूक्तेन आनो विश्वान् दिवौकस ॥५८॥
पितु[ख]मन्न समित्खाप्नो अग्निमग्ने नयेति च[७] ।
बृहस्पतेरनर्वाण[ग] ककतोपनिषत्पर[८] ॥५९॥
अपां तृणानां सूर्यस्य केचिदेतां स्तुतिं विदु ।

---

(१) ऋतौ स्नातामिति क॰ ख॰ घ॰ ।
(२) न स्तेनः इति ख॰ ग॰, नस्तेनदि ख॰ पुस्तकान्तरेषु ।
(३) चक्रीति ख॰ ग॰ ख॰ ।
(४) प्रसन्नेति ग॰ ट॰ ।
(५) चोभौ स्नातागोऽसौतीति क॰ ग॰ ख॰ घ॰ ।
(६) कतरेति यरेषु तिति क॰ ख॰ घ॰, सूक्तेन कतरेति लि ग॰ ।
(७) समिद्धो ह्याग्निरथोऽग्ने च नयाग्ने इति ख॰ ख॰ पुस्तकान्तरेषु ।
(८) परति ख॰ ट॰ पुस्तकान्तरेषु ।

(क) ऋ॰ १, ३४, १ । (ख) ऋ॰ १ ६१, ७ । (ग) ऋ॰ १, १९०, १ ।

ददर्श तदगस्त्यो वा[1] विपन्नं विपन्नकया ॥६०॥
अदृष्टाख्यो विश्वरूपः[2] सूक्तस्यास्योऽत्र तु त्वृचः[3]।
अस्तौ[4]दुत्समदोऽग्निं त्वं[5] जातवेदस[6]माप्रियः ॥६१॥
यज्ञेनाय समिद्धोऽग्निरतोऽग्निं[7] मन्त्रभिर्ज्ञवे(क)।
संयुज्य[8] तपसात्मानमैन्द्रं बिभ्रन्महद्वपुः ॥६२॥
अदृश्यत मुहूर्त्तेन दिवि च व्योम्नि चेह च।
तमिन्द्रमिति मत्वा तु[9] दैत्यौ भीमपराक्रमौ ॥६३॥
धुनिश्च चुमुरिश्चैव[10] सायुधावभिपेततुः।
विदित्वा स तयोर्भावमृषिः[11] पापचिकीर्षतोः ॥६४॥
यो जात इति सूक्तेन कर्माण्यैन्द्राण्यकीर्तयत्।

---

(१) त्विति ख॰ ग॰ पुस्तकान्तरच।
(२) अदृष्टाख्यो नदृश्यमः इति ख॰ ग॰ पुस्तकान्तरच।
(३) तृचः इति ग॰।
(४) स्तौतीति ग॰ पुस्तकान्तरच।
(५) अग्नित्वमिति ग॰ छ॰।
(६) जातवेदसमिति ख॰ ग॰।
(७) मातोऽग्निमिति क॰ ख॰ घ॰, अग्निरिति ग॰।
(८) संयोज्येति ख॰ ग॰ पुस्तकान्तरच।
(९) तौ इति ग॰।
(१०) चोभाविति ख॰ ग॰ पुस्तकान्तरच।
(११) ऋषिरिति क॰ ख॰ घ॰।

---

(क) ऋ॰ १, १०, ०।

उक्तेषु[१] कर्मस्वैन्द्रेषु भीतावागस्त्य विवेश ह[२] ॥६५॥
इदमन्तरमित्युक्त्वा ताविन्द्रस्तु न्यवर्हयत् ।
निहत्य तौ गृहमगादृषिं[३] शक्रोऽभ्यभाषत ॥६६॥
यथेष्टं मांस[४]खे पश्य प्रियस्त्वं[५] स्वागतोऽसि[६] मे ।
वरं गृहाण मत्तस्त्वमपत्यं[७] चास्तु ते तथ ॥६७॥
प्रज्ञ[८]स्तु मत्युवाचर्षिरस्माकं वदतां वर[९] ।
तनूनामस्तु चारिष्टिर्वाक्चास्तु पदयज्ञमा ॥६८॥
सुवीरा[क]रयिमन्त[ख]श्च वयन्त्वामिन्द्र धीमहि[१०] ।
इन्द्र[११]त्वाञ्च विजानीमो वय सम्मनि[१२] जन्मनि ॥६९॥

---

(१) कीर्णेष्विति क० घ० च० ।
(२) भीतौ सद्युपनुस्तदेति ख० ङ० पुस्तकान्तरञ्च ।
(३) इदमिति ङ० पुस्तकान्तरञ्च ।
(४) मांसमिति पाठः कल्पितः ।
(५) मांस खे पश्य प्रियस्त्वमिति क० घ० च० । अत्र, मांस खे पश्यं प्रियस्त्वमिति पाठो विशुद्धः ।
(६) प्रियस्य चागतोऽसीति ङ० ।
(७) मत्तश्चाश्चर्यमिति क० घ० च० ।
(८) प्रज्ञा इति क० घ० च० ।
(९) वरेति क० ग० घ० च० ।
(१०) [illegible]न्द्र वामहे इति ख०, इन्द्रमीमहे इति ङ० ।
(११) इन्द्रमिति ङ० ।
(१२) सम्मनीति क० ग० घ० च० ।

---

(क) ऋ० ६, १६, ५ । (ख) ऋ० १०, ७४, १ ।

त्वद्गत(१)श्चैष मे भावो माप्यगात्त्वद्रथीतरः(२) ।
निरुक्तं तदिदं चार्षमिन्द्रश्रेष्ठान्यृचाप्यया ॥७०॥
सर्वे वरमिदं सर्व्वं तदाकर्ण्य शचीपतिः(३) ।
तथेत्युक्त्वा तुराषाट् त्वां(४) पाणौ जग्राह दक्षिणे ॥७१॥
स्पर्शयास्य सखित्वेन पाणिना पाणिमस्पृशत् ।
सहितौ जग्मतुश्चैवं महेन्द्रसदनं(५) प्रति ॥७२॥
तत्रैनमार्हयत्प्रीत्या स्वयमेव पुरन्दरः ।
कर्म्मणा विधिदृष्टेन तस्यर्षिर्वाभ्यपूजयत्(६) ॥७३॥
सखित्वाच्च पुनस्त्वेन(७)मुवाच हरिवाहनः ।
गृत्सन्मादयसे यस्मात्त्वमस्मानृषिसत्तम ॥७४॥
तस्माद्गृत्समदो नाम शौनहोत्रो(८) भविष्यसि ।
ततो द्वादशभिः सूक्तैस्तुष्टावेन्द्रं सुधी(९)(क)स्त्वृषिः ॥७५॥

---

(१) त्वा तत इति क० घ० च० ।
(२) माप्यगाच्च रथीतरः इति ग० पुस्तकान्तरञ्च ।
(३) निरुक्तं तदिदं चार्षमित्यादि तदाकर्ण्य शचीपतिरित्यन्तपाठः, क० ग० घ० च० चिह्नितपुस्तकेषु, नोपलभ्यते ।
(४) त्वामित्यत्र तमितिपाठः शुद्धः। रथाङ्गन्निति ख० ग० पुस्तकान्तरञ्च ।
(५) महेन्द्रभवनमिति ख० ग० पुस्तकान्तरञ्च ।
(६) वाभ्यपूजयदिति क० । तमृषिं चाभ्यपूजयदिति ख० ग० घ० च० ।
(७) एवमिति पुस्तकान्तरम् ।
(८) शौनकोऽत्र इति ख० ।
(९) इन्द्रसुधीर्त्वृषिरिति क० पुस्तकान्तरञ्च ।

---

(क) ऋ० २, २५, १८ ।

दद्दर्श संस्तुवन्नेव तत्र स ब्रह्मणस्पतिम्।
बृहस्पतिं तु तुष्टाव दृष्टलिङ्गाभिरेव च[1] ॥७६॥
स तमप्यभितुष्टाव[2] चतुर्भिरत[3] उत्तरैः।
गणानां त्विमित्यस्यां[4] सहेन्द्राब्रह्मणस्पती ॥७७॥
बृहस्पतिं प्रसन्नाद्यां[5] ब्रह्मणस्पतिमेव च[6]।
तुष्टाव कर्मणैकेन प्रभावस्यान्तरन्तयोः[7] ॥७८॥
मित्रावरुणदक्षांश्चतुर्विजात[क]भगार्य्यमणाम्[8]।
आदित्यानामिमाः[9] सूक्तमिदं वारुणमुच्यते[10] ॥७९॥

---

(१) बृहस्पतिन्तु तुष्टाव दृष्टि लिङ्गस्तवैः सहेति ख०, दृष्टलिङ्गस्तवैः सहेति ङ०।
(२) अप्यभितुष्टावेति क० ख० ग० पुस्तकान्तरञ्च।
(३) चतुर्भिरिति उत्तरैरिति ग०, चतुर्भिरित उत्तरैरिति ङ०, चतु-र्भिरेव उत्तरैरिति पुस्तकान्तरम्।
(४) अस्या इति ङ०, विश्वामित्रस्येति ङ०।
(५) प्रसन्नत्वादिति ख० ङ०।
(६) ब्रह्मणस्पतिमेव वेति ङ०।
(७) द्वयोरिति ग०। श्लोकार्द्धमेतद् ख० ग० चिह्नितपुस्तकयोर्नोपलभ्यते।
(८) तुविजातभगार्य्यमाणमिति ख०।
(९) इमाप्युक्तमिति ख०। इमाः इत्यत्र इदमिति पाठो विशुद्धः।
(१०) वरुणमिति ग०।

---

(क) ऋ० १, १११, ७।

[1]घृतव्रता वैश्वदेवमृतमैन्द्रं परन्तु यत्[2]।
प्रहि क्रतुमिति त्वस्यामिन्द्रासोमौ सह स्तुतौ ॥८०॥
सरस्वति त्वमित्यस्मिन्नृचि मध्यमा तु वाक्[3]।
बृहस्पतिन्तु यो नस्तु[4] उत्तमा मरुतस्तुतिः[5] ॥८१॥
अस्माकं वैश्वदेवन्तु सूक्तादावुत्तमस्य तु[6]।
द्यावापृथिव्योर्द्वे त्वाष्ट्री[7] तथैवैन्द्री[8] परे ततः ॥८२॥
द्वे द्वे राकासिनीवाल्योः षड्लैङ्ग्योऽग्न्यास्तथान्तया[9]।
[10]रौद्रं मारुतन्तु पर[11]मा ते धारावरा इति ॥८३॥

---

(१) वाचस्पोयो न इत्याद्या तु स्वप्नाद्यप्रणाशिनी। श्लोकार्द्धमेतद् ग॰ चिह्नितपुस्तके घृतव्रतेति श्लोकात् पूर्व्वमधिकं पठितं।
(२) परं यत इति ख॰, पर तत इति ङ॰।
(३) माध्यमानुवागिति ख॰।
(४) बृहस्पते स्तुतिर्यो मा इति ख॰, यो न स्त इति ग॰।
(५) बृहस्पते स्तुतिर्यो उ त्वमरुत्स्वता स्तुति इति ङ॰।
(६) अस्माक वैश्वदेव स्यात् सूक्तादावस्य चास्य ऋगिति ग॰, स्यादथा स्तव चान्तिमास्य त्विति ङ॰ पुस्तकान्तरञ्च।
(७) ऋगाद्यावापृथिवीत्यृचेति क॰ घ॰ च॰, द्यावापृथिव्योस्त्वाष्ट्री वै इति ख॰। वै इत्यत्र वा इति ग॰।
(८) वाथ चैन्द्रा इति ग॰, चैन्द्री वर्षा इति ङ॰ पुस्तकान्तरञ्च।
(९) तथान्त्ययेति ग॰, षड्भुगग्न्याद्यन्तया स्तुता इति क॰ घ॰ च॰।
(१०) ख॰ ङ॰ चिह्नितपुस्तकयोः पुस्तकान्तरे च रौद्रमित्यस्मात् पूर्व्वं, तत्पूर्व्वं द्वे ऋचौ कुहूः कुहूमहमिति स्तुते। तदुत्तरे द्वे चानुमतेरनुमो न्विति ते स्तुते। धातुस्त्वस्त्वाद्यादौ धाता ददातु नो रयिम्(क)। इत्यधिकं पठितं।
(११) रौद्रं स्यात् परमारुतमिति पुस्तकान्तरम्।

---

(क) ऋ॰ १, १, ३।

ऋषेर्जिगमिषोरारां ववाशा[क]स्माय[१] दक्षिणाम्।
स तमार्येण सम्प्रेक्ष्य चक्षुषा यचिकीर्षितम्।
पराभ्यामभितुष्टाव सूक्ताभ्यान्तु कनिक्रदत्[ख] ॥८८॥

प्रशास्य गायंस्तपसाऽभ्यगच्छ[२]-
द्दृष्टुर्पितामेकमतश्च पुत्रान्।
स गाधिपुत्रस्तु जगाद सूक्तं
सोमस्य मेत्याग्रेयं यत्परञ्च[३] ॥८९॥

वैश्वानरीयेति[४] समित्समिद्वा
मोदे आग्नेये[५] उत्तरे तत्र[६] सूक्ते।
द्यावापृथिव्यौ तु निपातभाजा[७]
वापोऽथ देवाः पितरश्च मित्रः[८] ॥९०॥

आग्नेयेषु दृश्यन्ते सुतास्तु[९]-

(१) ववाशे प्रतीति ख॰ ङ॰ पुस्तकान्तरञ्च।
(२) अभ्यगच्छदिति ङ॰ पुस्तकान्तरञ्च।
(३) नेत्यग्नये तत्परे चेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(४) वैश्वानरीयेऽथेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) प्रियो द्वे चेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) तस्येति ख॰ ङ॰ पुस्तकान्तरञ्च। उत्तरेत्यचेति ग॰।
(७) द्यावा पृथिव्या उभयो निपाता इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(८) आपोऽथ देवा पितरोऽथ मित्र इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(९) क॰ घ॰ च॰ चिह्नितपुस्तकेषु सुतास्तु इत्यत्र तु इति पाठो न दृश्यते।

(क) ऋ॰ ३, ३, १। (ख) ऋ॰ २, ४२८, १।

वैश्वानरो वरुणो जातवेदाः।
स्तूयेतैका यत्र यत्रास्तुतिर्वा[१]
नैपात्यांस्तां[२]श्चोपमार्थांश्च[३] विद्यात् ॥८१॥
राजर्षयो गृत्समदो वसिष्ठो
भरद्वाजः कुशिको गौतमश्च।
विश्वेऽश्विनावङ्गिरसोऽथ योऽदिति-
र्भौमाः कण्वो[४] भृगवो रोदसी दिशः ॥८२॥
सावित्रसौम्याश्विन[५]मारुतेषु
ऐन्द्राग्नेये रौद्रसौर्यापसेषु[६]।
आद्रावन्ते सूक्तमध्ये सुतास्तु[७]
न व्याप्नुन्ति देवताः सूक्तभाजः[८] ॥८३॥
अग्नेः समद्रोऽध्याय ऊर्द्ध ऊषु ण ऊतये[क]।

---

(१) स्तुतौ यत्र तत्रास्त्यस्तुतिर्वेति ख० ग० पुस्तकान्तरञ्च।
(२) निपातार्थाः इति क० ग० घ० च०।
(३) उपमार्थाश्चेति पाठः साधुः।
(४) कक्षा इति ख० ग० पुस्तकान्तरञ्च।
(५) सौम्याश्विनेति ख० ग० पुस्तकान्तरञ्च।
(६) सौर्यौषसेष्विति ख० ग० पुस्तकान्तरञ्च, वैविशेष्विति च०।
(७) स्तुताख्याः इति ख० पुस्तकान्तरञ्च।
(८) प्रश्ने दैवतं सूक्तभाजिनोमिति पुस्तकान्तरम्, सूक्तभाजा इति क०, सूक्तभाजिनामिति ख०।

---

(क) ऋ० १, ३, १।

एते काण्व्यावृचौ यौप्यौ ह्यञ्जन्ति त्वेति पञ्च च[१] ॥९४॥
प्रेषा वङ्क्षभ्यो यूपेभ्यो[२] वैश्वदेवी तृगष्टमी[३] ।
अंस्या[क]न्त्या प्रश्विनी योक्रा[४] षष्ठमैन्द्राग्न[५]मुच्यते ॥९५॥
वैश्वदेव्यग्निसुपर्ण[६] दधिक्राव्णेति[७] चैतया ।
आग्नेन्द्री त्वम इन्द्रेति परा[८] वैश्वानरस्तृचः ॥९६॥
प्रयन्तु मारुता[९]स्त्वन्त्या प्रतधारश्रुतस्तवः ।
प्र वो वाजा ऋतू[१०] स्तौति ऋत्विजः स्तौति[११]मन्यतः॥९७॥
पुरीष्याश्च[१२] [ख]इति त्वग्नान्धिष्ण्यानग्नीन् प्रशंसति ।

---

(१) एते काण्वग्रावृचौ चोभौ यौप्यौ ह्यञ्जन्ति पञ्च चेति ख० ।
(२) प्रैषेभ्यो वङ्क्षयूपेभ्य इति ग० ।
(३) वैश्वदेवी ऋगष्टमीति क०, वैश्वदेव्यृगष्टमीति पुस्तकान्तरम् ।
(४) स्यान्ता प्रमश्विना योक्त्रेति घ० ।
(५) स्यान्ताः प्रमश्विनाः योक्त्रेऽन्त्यौ ऐन्द्राग्नमिति ङ० पुस्तकान्तरञ्च ।
(६) अग्निसुपर्णं वैश्वदेवीति क० ख० ग० घ० ङ० ।
(७) दधिक्रामितीति क० ग० घ० ङ० ।
(८) अग्नीन्द्रौ त्वम इन्द्रश्चम् परेति ङ० पुस्तकान्तरञ्च ।
(९) प्रयन्तमारुतः इति ख० ङ० पुस्तकान्तरञ्च ।
(१०) ऋतूनितिपाठः समीचीनः ।
(११) स्तौति ऋत्विजश्चैवेति ख० ङ० पुस्तकान्तरञ्च ।
(१२) पुरीष्यास इति ग० ।

---

(क) ऋ० १, १९१, ७ । (ख) ऋ० ३, २२, ४ ।

ज्ञेया[१]श्चैव तु होतारस्ते दैव्याश्चैव तत्र तु[२] ॥९८॥
चयोविंशतिरैन्द्राग्नौ इच्छन्तीति पराक्षतः।
सूक्ते प्रेति तु नद्यश्च विश्वामित्रं समूदिरे[३] ॥९९॥
[४]पुरोहितः सविश्वार्थे सुदासः सोऽहरद्धनम्।
विपाट्छुतुद्र्योः सम्भेदं शमित्यैते उवाच ह ॥१००॥
प्रवाद्यास्तव दृश्यन्ते द्विवदङ्गवदेकवत्।
अक्षेत्यर्द्धर्चे पञ्चो वा नद्यौस्यैकवन्ति ते ॥१०१॥
आद्ये ह्यृचे द्विवाद्धे विश्वामित्रवचःश्रुतेः।
एनाभिर्ऋग्भिर्वा नद्य ऋषिं बहुवदूचिरे ॥१०२॥
षष्ठ्यष्टम्यो[५]श्चतुर्थ्याश्च दशम्याश्चेतरा ऋषेः।
सप्तम्यामपि षष्ठ्याश्च यौ देवौ[६] परिकीर्तितौ ॥१०३॥
निपातिनौ तु तौ ज्ञेयौ लैन्द्रापार्वत्युगुत्तमे[७]।
करोति पुत्रिकां नारी[८] यथा दुहितरन्तथा ॥१०४॥

---

(१) यूपा इति ख॰।
(२) तत्र चेति ख॰ ग॰।
(३) विश्वामित्रः समूचिरे इति ख॰ ग॰ पुस्तकान्तरञ्च, स संवदमिति क॰ ख॰ च॰।
(४) पुरोहित इत्यादि श्लोकत्रयं क॰ ख॰ ग॰ चिह्नितपुस्तकेषु नोपलभ्यते।
(५) षष्ठ्यष्टम्योरिति पाठः साधुः।
(६) यौदकौ इति ग॰।
(७) पार्वतगुत्तमेति ग॰ पुस्तकान्तरञ्च।
(८) नारीति ख॰ ग॰ पुस्तकान्तरञ्च।

तस्यां सिञ्चति रेतो वा[१] तच्छ्रावयदिति कीर्तितम्।
रिक्थस्य दुहितुर्दानं नेत्यृचि प्रतिषिध्यते[२] ॥१०५॥
तस्याश्चैव[३] यवीयांसं भ्रातरं ज्येष्ठवत्सुतं।
सुदासस्य महायज्ञे दक्षिणा गाधिसूनवे[४] ॥१०६॥
निगृहीतं बलाच्चेतः[५] सोऽवसीदद्विचेतनः।
तस्मै [६]ब्राह्मीं तु सौरीं वा नाम्ना वाचं ससर्परीं॥१०७॥
सूर्य्यस्यादिहागत्य ददुस्ते[७] जमदग्नयः।
कुशिकानां ततः सा वागमतिं तामपाहनत् ॥१०८॥
उपेत्य वाच्यां[८] कुशिकान् विश्वामित्रो बुबोध यत्।
लब्ध्वा वाचं च हृष्टात्मा[९] तानृषीन् प्रत्यपूजयत्[१०] ॥१०९॥
ससर्परीरिति द्वाभ्यामृग्भ्यां वाच स्तुवन् स्वयम्।
स्थिरावित्यनयो[क]ऽन्नान्यनडुह[११]श्च स्वगृहान् व्रजन् ॥११०॥

---

(१) रेतो वा इति ख० पुस्तकान्तरञ्च।
(२) प्रतिषेधतीति ख० ङ० पुस्तकान्तरञ्च।
(३) तस्याश्चेति ख० ङ० पुस्तकान्तरञ्च।
(४) प्रक्षिप्ता गाधिसूनवे इति क० ग० घ० च०।
(५) न्यग्रोधा बलाच्चेतः इति ख० ङ० पुस्तकान्तरञ्च।
(६) तस्मै इति क० घ०।
(७) ता ददुरिति ख० ङ० पुस्तकान्तरञ्च। आगत्येत्यत्र आहृत्येति क० ग० घ० च०।
(८) उपेति वाच्या कुशिकानिति क० घ०, उपेत्य वाचं कुशिकानिति ङ०।
(९) प्रतिष्ठात्मेति ख० ङ० पुस्तकान्तरञ्च।
(१०) अभ्यचेतयदिति ङ० पुस्तकान्तरञ्च।
(११) इत्यनयाऽन्नान्यनडुहमिति क० घ०। अनडुहमित्यत्र अनडुहः इति घ०।

---

(क) ऋ० ३, ५०, १०।

(१)अनयोऽङ्गानि चोत्पाद्य अनड्वाहौ महात्मनौ ।
ततश्च स्वशरीरस्य ग्रहान् स स्वयमाप ह ॥११॥
रथस्य स्वशरीरेण ग्रहान् गच्छन् पराददे ।
पराशरस्ततो याश्च वसिष्ठद्वेषिणीर्विदु.(२) ॥११२॥
विश्वामित्रेण या(३) प्रोक्ता अभिशापा इति स्मृताः ।
द्विषद्द्वेषास्तु ताः प्रोक्ता विद्यास्त्वेवाभिचारिका.(४) ॥११३॥
वसिष्ठास्ता(५)न शृण्वन्ति तदाचार्यकसम्मतम् ।
कीर्त्तनाच्छ्रवणाद्वापि महान् दोषः प्रजायते(६) ॥११४॥
शतधा भिद्यते मूर्द्धा कीर्त्तितेन श्रुतेन वा ।
तेषां बालाः प्रमीयन्ते तस्मात्तास्तु न कीर्त्तयेत् ॥११५॥
विश्वांश्च देवां(७)स्तुष्टाव चतुर्भिरिममित्यृषिः ।
अस्तौद्विश्वात्मना सर्वान् मन्यमानः परं पदम् ॥११६॥

---

(१) अनयः इत्यादिसार्द्धश्लोकः क० ग० घ० चिह्नितपुस्तकेषु नेक्ष्यते । तेषु अस्मिन् स्थले, तस्य स्वां शरीरस्य ग्रहानाच्छन् परीददे इति पाठोऽस्ति ।

(२) वसिष्ठद्वेषिण्यः स्मृता इति क० ख० ग० घ० ।

(३) त्विति क० ख० ग० घ० च० ।

(४) विद्वेषिण्यः स्मृता त्रिचादभिचारेषु प्रयुज्यते । इति क० ग० घ० च० ।

(५) त्विति ख० पुस्तकान्तरञ्च, ते इति घ० ।

(६) श्लोकार्द्धमेतत् क० घ० चिह्नितपुस्तकयोर्न दृश्यते ।

(७) विश्वान् देवांश्चेति ङ० पुस्तकान्तरञ्च ।

[१]देवानामसुरत्वं तदेकं महदितीरयन्।
अश्विनौ मित्र स्वभवो[२] धेनुर्मित्र इहेह वः ॥११७॥
[३]वैश्वदेवीति विज्ञेया मैत्री मित्राय पञ्च तु।
ऐन्द्राग्नेवस्तृचस्तत्राग्ने सूक्तः स उत्तमः[४] ॥११८॥
[५]पूर्वे द्वृचे निपातोऽत्र उपो वाजेन पञ्चमात्।
उपसादुत्तरे षड्भिः स्तुता ऋग्देवता ऋचः[६] ॥११९॥
ऐन्द्रावरुणः प्रथमो बार्हस्पत्यस्ततः परः[७]।
पौष्णसावित्रसौम्याश्च मैत्रावरुण उत्तमः[८] ॥१२०॥
तुष्टाव जमदग्निश्च[९] तेन देवा हता द्वयौ।
देवर्षिपितृपूजार्थं च अन्नाद्यपचक्षुः[१०] ॥१२१॥

---

(१) यस्तौदित्यात्मना सर्व्वानित्यादि महदितीरयन्नित्यन्तपाठः क॰ ग॰ घ॰ चिह्नितपुस्तकेषु नोपलभ्यते।
(२) स्तनदः इति क॰ घ॰ च॰।
(३) वैश्वदेवीति श्लोकार्द्धं ख॰ ङ॰ चिह्नितपुस्तकयोर्न विद्यते।
(४) उत्तमे इति ख॰ ङ॰ पुस्तकान्तरस्थ।
(५) पूर्व्वे द्वृचे इति श्लोकार्द्धं क॰ ख॰ घ॰ चिह्नितपुस्तकेषु नेष्यते।
(६) पौषसादुत्तरास्त्वन्ये षट् एयग्देवताऋचा इति क॰ ख॰ ग॰ घ॰ च॰।
(७) वपापरः इति ग॰। तदुत्तरः इति ङ॰।
(८) मसामन्त्यस्तु यस्तृच इति ङ॰ पुस्तकान्तरस्थ।
(९) जमदग्निस्तु इति ख॰ ङ॰ पुस्तकान्तरस्थ।
(१०) पपापान्नाद्यियच्छुन इति क॰ ग॰ घ॰ च॰।

यस्य वै श्येनरूपेण आहर(1)द्धृत्वरा मधु।
सोऽग्निन्तु पञ्चदशभिरिन्द्रं षोडशभिः परैः ॥१२२॥
ऋषिस्त्वामिति तुष्टाव सूक्तैरेतैस्तु(2) गौतमः।
स भ्रातरमिति त्वास्तु(3) तिस्रस्त्वग्निर्निपातभाक् ॥१२३॥
वरुणेनाभिस्तौति त्वाङ्ग(4)रन्त्ये निपातितम्।
सिद्धोमदेवते सूक्ते एके(5) मत्यग्निरेव तु(6) ॥१२४॥
ऋषिर्बोधदिति द्वाभ्यां स्तौति सोमकमेव तु(7)।
तस्यैव वायुरर्थाय(8) पराभ्यामश्विनौ स्तुतौ ॥१२५॥
अञ्जवासुजनिष्येऽहं(9) कुवाणं गर्भ एव(10) तम्(11)।
अव्यगात्त्वदिति(12) पुत्रमिन्द्रमात्मपितैषिणौ ॥१२६॥

---

(१) यस्य च श्येनरूपेण चाहरदिति ख॰ ग॰ पुस्तकान्तरञ्च।
(२) एति स्तिति ग॰ घ॰, एति चेति ङ॰ पुस्तकान्तरञ्च।
(३) त्वास्त्विति ङ॰।
(४) अभिस्तौत्या प्राङ्ग इति क॰ ग॰ घ॰ च॰।
(५) सिद्धोक्तदैवत सूक्तमेवे इति च॰ घ॰।
(६) सिद्धोक्तिदैवते सूक्ते एके प्रत्यग्निरित्युभे, इति ङ॰।
(७) सोमकभूपतिमिति ङ॰ पुस्तकान्तरञ्च।
(८) वायुयोऽर्थायेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(९) अनिष्यामेति क॰ ख॰ च॰, अनि-ष्याम इति ग॰।
(१०) गर्भमथेति क॰ ग॰ घ॰ च॰।
(११) त्विति क॰ ख॰ ग॰ घ॰ च॰।
(१२) अव्यगादहितिरिति ङ॰ पुस्तकान्तरञ्च।

इन्द्रस्य हरयो ह्यश्वा अग्नेरश्वस्तु[१] रोहितः ॥१२५॥
सूर्य्यस्य हरितश्चैव[२] वायोर्नियुत एव च ।
रासभा रोहितो[३]ऽश्विभ्यामजाः[४]पूष्णस्तु[५]वाजिनः॥१२६॥
पृषतो[६]ऽश्वास्तु मरुतां गावोऽरुण्यस्तथोषसः[७] ।
सवितुर्वाजिनः श्यावा[८] विश्वरूपा बृहस्पतेः ॥१२७॥
सर्वैस्ते देवताभिस्तु[९] स्तूयन्ते सम्पदो[१०] ऽन्यथा ।
आयुधं वाहनं चापि स्तुतौ यस्येह दृश्यते ॥१२८॥
तमेव तु स्तुतं विद्यात्तस्यात्मा बहुधा हि सः ।
कनीनका[क]स्तूकयोषो हर्य्योः स्तुति[११] रिहोच्यते ।
चत्वार्य्यंतस्य विज्ञेयान्यमन्त्रह्याणि[१२] विद्रधे[ख] ॥१२९॥

इति बृहद्देवतायां चतुर्थोऽध्यायः ।

---

(१) चश्वास्त्विति क० ख० घ० ङ० च० ।
(२) मोक्ता इति ख० ङ० पुस्तकान्तरञ्च ।
(३) रासभो मोहितः इति ख०ङ०पुस्तकान्तरञ्च, रासभौ सहितः इति ग० ।
(४) माजा इति क० घ० च० ।
(५) पूष्णस्त्विति ख० ङ० पुस्तकान्तरञ्च ।
(६) पृषत्य' इति ङ० पुस्तकान्तरञ्च ।
(७) तथोषसामिति ख० ङ० पुस्तकान्तरञ्च ।
(८) श्यामा इति क० घ० च० ।
(९) चेति ख० ङ० पुस्तकान्तरञ्च ।
(१०) स्तूयन्तेऽप्यसेऽन्यथेति क० घ० च०, स्तूयन्तेऽप्यन्यथोऽन्यथेति ग० ।
(११) धर्मसक्तिरिति क० घ० च०, स्तकयोषोऽप्यर्धशक्तिरिति ग० ।
(१२) चत्वारि चरमाखेयान्याप्रश्नह्याणीति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, ७, २ । (ख) ऋ० ४, ३२, २३ ।

## अथ पञ्चमोऽध्यायः ।



प्रेति पञ्चार्धर्चं चौथि(१) दधिक्राविं पराण्यतः ।
ऋग्द्यावापृथिव्यौ स्तौति दधिक्राव्णां(क)मुखे तु या(२) ॥१॥
परोक्षैरमुतो वाग्भिर्नामभिस्तु स्तुतास्त्रयः ।
अग्निर्वायुश्च सूर्यश्च हंसः शुचिषदित्यृचा(३) ॥२॥
नियुक्ता सूर्यदेवत्या हंस इत्यैतरेयके(४) ।
द्वे ऐन्द्रावरुणे सूक्ते(५) तत्र(६) चौष्याश्विनाश्विकाः(७) ।
अयं वायो विष्ठो(ग) लेषु (८)वायव्याः सप्त कौत्सिताः ॥३॥

---

(१) पञ्चार्धर्चाश्चौति ङ॰ ।

(२) दधिक्राव्णा स्तुतौ हि वामिति ख॰, दधिक्राव्णां मुखे तु येति ग॰, दधिक्राव्णामुतो (ख) हि वामिति ङ॰ ।

(३) इत्यृचीति क॰ ग॰ घ॰ च॰ ।

(४) श्लोकार्धमेतत् क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते ।

(५) द्वे इन्द्रावरुणे इन्द्रादिति ङ॰ ।

(६) तत इति ग॰ घ॰ पुस्तकान्तरयोः ।

(७) आश्विनाश्विक इति क॰ ख॰ ग॰ घ॰ च॰ ।

(८) विष्ठो सां त्या इति घ॰ पुस्तकान्तरे ।

---

(क) ऋ॰ ४, ३८, ९ । (ख) ऋ॰ १, २२, १५ ।

(ग) ऋ॰ ४, ४८, १ ।

नव चैवेन्द्रवायव्या ऐन्द्र्य[1]स्तिस्रः शतेन षट्[2] ।
इदं कथितदैवत्यं यत्तु स्तम्भोत्तमो तृचः[3] ॥४॥
स्तुतिरिन्द्राबृहस्पत्योरष्टावेता ऋचः स्मृताः ।
बार्हस्पत्यन्तु तत्सूक्तमिदमित्यौपमे परे ।
पुरो धातुः कर्णभंशा स इन्द्रानोच्यते[4] तृचे[5] ॥५॥
तत्साविची द्वे तु को वैश्वदेवं[6]
मही द्यावा पृथिवीयं तत्परस्तु[7] ।
क्षेत्रस्येति तिस्रः क्षेत्रपत्याः[8]
शुनं[क] वाहाः शुनदेवी तृगुत्तमा[9] ॥६॥

---

(१) इन्द्रः इति क० ग० घ० च० ।
(२) शतेन षडिति छ० ।
(३) इदमित्यौपम्ये परे इति क० घ० च०, यत्तु स्तम्भीतिमो तृचः इति ग० ।
(४) स इन्द्राणोच्यते इति पुस्तकान्तरम् ।
(५) स्तुतिरिन्द्राबृहस्पत्योरिति श्लोक क० घ० च० चिह्नितपुस्तकेषु नेक्ष्यते ।
(६) तत्साविचेको वैश्वदेवमिति छ० ।
(७) परस्तु परिति क० ग० घ० च० ।
(८) क्षेत्रस्य क्षेत्रपत्यमनुपश्यन्निति क० घ०, क्षेत्रस्येति क्षेत्रपत्यम् परश्चिति ग० ।
(९) शुनदेवनृगुत्तरेति ग० ङ० पुस्तकान्तरम् ।

---

(क) ऋ० १, ११०, ५८ ।

वायुः शुनः सूर्य्य एवात्र(१) सीरः(२)
शुनासीरौ(क) वायुसूर्य्यौ(३) वदन्ति ।
शुनासीरं यास्क इन्द्रन्तु मेने
सूर्य्येन्द्रौ तौ मन्यते शाकपूणिः ॥७॥
शुनासीरौ पञ्चम्यां तु स्तुतौ तौ
सीतायै षष्ठी त्वथ सप्तमी च(४) ।
शुनं नः फालाः(ख) कृषिं स्तौति पादः(५)
शुनं कीनाशाः(ग) कृषिजीवान् मनुष्यान्(६) ॥८॥
शुनं पादे पर्जन्यं तृतीये(७)
पौमृषिः कृषिकामो(८)जगाद ।

---

(१) एवात्रेत्यत्र सैवेति ख० ङ० पुस्तकान्तरेषु ।
(२) सीर्य्यं इति क० घ० च० ।
(३) वायुसूर्य्यमिति क० घ० च० ।
(४) द्वे तु सीतायै षष्ठी सप्तमी चेति क० ग० घ० च० ।
(५) पादे इति ङ० ।
(६) कृषिनीमनुष्यानिति क० घ० च० ।
(७) स्तुतः पादेऽत्र पर्जन्यस्तृतीये इति ख० ग० घ० च० ।
(८) अस्याम् त्वृषिर्धर्म्मकाम इति क० घ० च०, अस्यन्तृषिर्धर्मका
इति ग० ।

---

(क) ऋ० ४, ५७, ५ । (ख) ऋ० ४, ५७, ८ । (ग) ऋ०
५७, ८ ।

ऋषिं वा[१] स्तौति सर्व्वं हि सूक्तं
समुद्रादित्यग्नेर्मध्यमस्य ॥९॥
आदित्यं वा ब्राह्मणोक्तं प्रदिष्टं
माग्नेयं[२] यद्बाह्यसूक्तं[३] हि दृष्टं[४] ।
अपां स्तुतिं वा यदि वा घृतस्तुतिं
गवां स्तुतिं वा सूक्त[५]मेतद्वदन्ति ॥१०॥
स्वर्भानुदृष्टं सूर्यस्य अपहत्य[६]तमोऽत्रयः ।
सप्तविंशतिभिः सूक्तैरबोधीत्यग्निमस्तुवन् ॥११॥
त्रैवृष्ण[क]स्त्रसदस्युश्च[ख] अश्वमेध इति त्रयः ।
स्तूयमानाः परीक्ष्याः स्युरग्निर्विश्वेते[७]कश्चित् क्वचित्[८]॥१२॥
ऐक्ष्वाक[९] स्त्र्यरुणो राजा त्रैवृष्णो रथमास्थितः ।

---

(१) ऋषिवदिति क० घ० च० ।
(२) आग्नेयमिति ख० ङ० पुस्तकान्तरेषु ।
(३) बाह्यान्यसूक्तमिति क० घ० च०, वा ब्राह्मसूक्तमिति ग० ।
(४) प्रदिष्टमिति ख० ग० पुस्तकान्तरेषु ।
(५) गवामेके सौर्य्यमिति क० ग० घ० च० ।
(६) स्वर्भानुदिष्टसूर्य्यस्यापघ्नन् ये इति ग० ख० पुस्तकान्तरेषु ।
(७) यान्विश्वेते इति घ० ।
(८) *त्रैवृष्णस्त्रसदस्युश्चेति श्लोकार्द्धं ख० छ० चिह्नितपुस्तकयोर्न विद्यते ।*
(९) ऐक्ष्वाकुरिति क० ग० घ० च० ।

---

(क) ऋ० ५, २७, १ । (ख) ऋ० ५, २८, १ ।

अविन्दत पिशाचीं च[1] जायां तस्य [illegible] भूपतेः ॥१८॥
निषण्णः स तया सार्द्धं मासं द्यां कश्यपावपि[2] ।
तामुपामन्त्रयाञ्चक्रे कमेतं त्वमिति नृपा[3] ॥१९॥
घरः[4] कुमाररूपेण तृणस्था[5]मभ्यभाषत ।
विश्वोतिषेति चोक्तायां सहसाग्निरुदज्वलत् ॥२०॥
[6]पिशाचीमदहत्तां स यत्र चोपविवेश सा ।
एष एव परामृष्टो भाल्लवी ब्राह्मणो[7]ऽमृचः ॥२१॥
निदानसंज्ञके ग्रन्थे छन्दोगानामिति श्रुतिः[8] ।
भवेदेव परामर्शः सूक्तस्यास्य व्यपेक्षया[9] ॥२२॥
भवन्ति याभ्या मन्त्रा[10] हि विधिशब्देन[11] चोदिताः ।

---

(१) तामिति ग० छ० पुस्तकान्तरञ्च ।
(२) कश्यपावपीति क० घ० च० ।
(३) पुंस्त्वृचेति छ० ।
(४) वरः इति क० घ० च० ।
(५) मुखंस्तामिति छ० ।
(६) ग० छ० चिह्नितपुस्तकयोः पुस्तकान्तरे च, पिशाचीमदहत्तां स इति श्लोकात् प्राक्, सहसाग्नेः समायान्तं प्रकाशस्य पश्चादपरिच्छिन्नं श्लोकार्द्धं पठितम् ।
(७) भाल्लवि ब्राह्मणः इति ख०, भाल्लविब्राह्मणः इति छ० ।
(८) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(९) निवृत्येति ग० छ० पुस्तकान्तरञ्च ।
(१०) याम्यास्त्रैयामिति क० ग० घ० च० ।
(११) विधिपूर्वेणेति क० ग० घ० च० ।

दृश्यन्ते ब्राह्मणे मन्त्रा एकदेशे प्रदर्शिताः ॥२३॥
जामदग्न्यो यथाप्रिय[1] स्तौतीया[2]श्चैतरेयके।
आप्रियः सुसमिद्धाय[3] पञ्चमं सूक्तमत्र तु[4] ॥२४॥
एतद्[5]वैश्वदेवी वा अन्या चैन्द्राग्न्युपोत्तमे।
ऐन्द्राणि द्वादश त्वोणीत्युत्तमा[6]यत्र[7] संस्तुतः ॥२५॥
उग्रमेति तु पादेन सहयदामनेन च[8]।
इन्द्राकुत्सेति चैतस्यां कुत्सेनेन्द्रः स्तुतः सह ॥२६॥
यस्यां सूर्य्येति चाचीणां पश्चर्षि[9] कर्म कीर्त्यते।
[10]वैश्यपाल्यरुणो राजा अश्वमेध आर्पं च यः ॥२७॥
स्तूयमानाः प्रतीक्ष्याः स्युरपिश्चैते क्वचित् क्वचित्।
अनस्वन्तेति सूक्तेऽस्मिन्नाग्नेयेऽपिर्ऋषिः स्वयम् ॥२८॥
दानतुष्ट प्रशंसैताश्चाजर्षीमिति केचन।

---

(१) जामदग्न्यकर्षेवाज्य इति क० ख० च०, यथाप्रीय इति ग०।
(२) स्तौतीथाः इति ख० ग० ङ० पुस्तकान्तरश्च।
(३) आप्रिय सुसमिद्धायेति क० ग० घ० च०।
(४) अचिरिन्विति ख० ङ० पुस्तकान्तरञ्च।
(५) एतदमिति क० ग० घ० च०, दोदमिति ख०।
(६) द्वादशान्यादौन्युत्तमा इति ङ० पुस्तकान्तरञ्च।
(७) स्वेति च० ख० ग० घ० च०।
(८) उग्रमेति च पादोऽय सहयदा यस्य य इति ख०, यस्य यः इत्यत्र यस्याय इति ङ० पुस्तकान्तरञ्च।
(९) पश्चर्ष इति क० घ० च०।
(१०) वैश्यपाल्यरुणो राजेत्यादि सार्द्धश्लोकः क० ग० घ० च० चिह्नित पुस्तकेषु न विद्यते।

आभीरथ्येयपाञ्चेभ्यो अग्निं प्रति च दृश्यते ॥१९॥
अयुतञ्च गवां त्रीणि शतान्यथ च विंशतिः ।
सौवर्णशकटं गोभ्यां त्र्यरुणोऽदान्नृपोऽध्वये ॥२०॥
अश्वमेधशतं चोष्ट्रांस्त्रसदस्युर्धनं बहु ।
राज्ञः प्रति च तत्सूक्तं बभाष इति केचन ॥२१॥
आत्मा ज्ञितात्मने[1] दद्याद्यद्दौर्नृपतेर्ऋषिः ।
अत्रेः सुतस्त्वपि बभ्रुमार्त्विज्याय वृणाञ्च यः ॥२२॥
मदसद्दक्षिणे सोमे वव्रे तं सोऽप्ययाजयत् ।
ददौ तदौशनो राजा सहस्राणि शतानि च ॥२३॥
तस्मै चत्वारि चत्वारि महावीरस्य काञ्चनम् ।
प्रवर्ग्येषु महावीराः सौवर्णास्तस्य चाभवन् ॥२४॥
प्रतिगृह्य महर्षिर्गच्छन् मध्यसेनाग्निना पथि ।
पृष्ट इन्द्रेण चाचख्यौ भद्रं चतसृभिश्च तत् ॥२५॥
सौमुषाम् वैश्वदेवानि एकादश[2] पराण्यत[3] ।
मारुतानि दश प्रेति इत्याभीत्यृषि तु स्तुता[4] ॥२६॥
द्वितीययागपया सुतः सविता शौनकोऽब्रवीत्[5] ।
उपैति बार्हस्पत्यस्तृचो यो मारुत्युत्तरा ॥२७॥

---

(१) आत्मविताकने इति पाठः साधुः ।
(२) सौमुषाम् वैश्वदेवान्येकादशेति क० ।
(३) स्थित ङ० पुस्तकान्तरयोः ।
(४) ऐतेरायाभीस्तृषि तु संस्तुतेति ग०, इत्यापि न वाचा स्तुतेति ख० ट० पुस्तकान्तरयोः ।
(५) श्लोकार्द्धमेतत् क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।

तमुष्टुही तु रौद्री स्यात्[१] प्रस्तुतिरिति स्मृति।
इहस्पतिः शाकपूणिः पर्जन्याग्नी तु गालवः ॥३८॥
यास्कस्तु पूषणं मेने स्तुतमिन्द्रन्तु शौनकः।
वैश्वानरं भागुरिस्तु माहत्यौषसमाश्विनं[२] ॥३९॥
वायव्याध्वर्यवः सौमी इमेत्यैन्द्री परा तु या[३]।
[४]अग्निं धर्मं पराञ्जन्ति[५] आश्विनौ स्तौत्यृगर्द्ध च ॥४०॥
प्रेति वां पूषणं या चेत्यर्द्धर्चेऽग्निरिहोच्यते।
प्रथमेऽथ द्वितीये च स्तुता एति दिवौकसः ॥४१॥
आशापं मध्यमां स्तौति ततोऽन्या तु बृहस्पतिं।
[६]ज्याया समिति चादित्यं स यो वायुरिहोच्यते ॥४२॥
तं प्रत्नथे[क]ति सौमी वा दैव्यैन्द्री वा प्रजापतेः।
परोक्षवैश्वदेवं तदाह कौषीतकिः स्वयम् ॥४३॥
तेषु स्तौत्यमित्युक्तं देवान् ऊव[ख] इदं परम्।

---

(१) त्विति क० ग० घ० च०।
(२) चाश्विनीति क० ग० घ० च०।
(३) इयदैन्द्रार्धमाश्विनीति ख० पुस्तकान्तरञ्च।
(४) अग्निं धर्ममित्यादिसार्द्धश्लोक क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः।
(५) पराञ्जन्तीति पुस्तकान्तरम्।
(६) ज्याया समिति चादित्यमित्यादि देवान् ऊव इदं परमित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।

---

(क) ऋ० १,८६,१। (ख) ऋ० १,१०,७।

देवानां पत्नीरिति तु (१)देवपत्न्यो द्व्यृचे स्तुताः ॥४४॥

अयं चतुर्णामिति चेन्द्रवायू
त्रिभिः स्तुतौ वायवुक्थे(क)ति वायुम् ।
इयं द्यावा रोदसी स्तूयतेऽच
षष्ठ्याः स्तुता मरुतो रुद्रपत्न्याः(२) ॥४५॥

आ रुद्रास इति त्वस्यां रुद्राणां संस्तुतो गणः ।
मरुतां तु गणश्चैते नाम्ना(३)रुद्रा इति स्तुताः(४) ॥४६॥
उभावग्निरिमौ(५) चोभौ त्वग्नी(६)पार्थिवमध्यमौ(७) ।
यदुत्तमे हवेऽर्द्धर्चे इले(ख)ऽग्निं संस्तुतौ द्व्यृचे ॥४७॥
मध्यमा वाक् स्त्रियः सर्वाः पुमान् साईश्च मध्यमः ।
गणाश्च सर्वे मरुतो गुणभेदात् पृथक् पृथक्(८) ॥४८॥

(१) पेति ख० ङ० पुस्तकान्तरयोः ।
(२) क० ग० घ० चिह्नितपुस्तकेषु, अयं चतुर्णामितीति श्लोकस्थले, अयं चतुर्णामिति च इन्द्रवायुस्त्रिभिः स्तुतौ । वायुर्द्वितीयदान्त्येका इयानिति तु रोदसी । इति पाठो वर्त्तते ।
(३) गयसीतन्नामेति क० ग० घ० ङ० ।
(४) स्तुता इति क० ग० घ० ङ० ।
(५) चयमिति ङ० पुस्तकान्तरयोः ।
(६) चोभावग्नी इति ङ० पुस्तकान्तरयोः ।
(७) पार्थिवमध्यमाविति ख० ।
(८) क० ग० घ० ङ० चिह्नितपुस्तकेषु, यदुत्तमे हवेऽर्द्धर्चे इत्यादिसार्द्ध-श्लोकस्थले अग्ने मरुद्भिरित्यस्यां मरुद्भिः सह संस्तुताविति श्लोकार्द्धं वर्त्तते ।

(क) ऋ० ७, ९०, ३ । (ख) ऋ० १, १८८, ८ ।

राजर्षिरभवद्दार्भ्यो रथवीति(क)रिति श्रुतः(१) ।
स यक्ष्यमाणो राजर्षिरभिगम्य प्रसाद्य च ॥४९॥
आत्मानं कार्य्यमर्थं(२)च ख्यापयन् प्राञ्जलिः स्थितः ।
अवृणीतर्षिमात्रेयमार्त्विज्यायार्चनानसम्(ख) ॥५०॥
स सपुत्रोऽभ्यगच्छत्तं राजानं यज्ञसिद्धये ।
श्यावाश्व(ग)श्चात्रिपुत्रस्य पुत्रः खल्वर्चनानसः ॥५१॥
साङ्गोपाङ्गान् सर्व्ववेदान् यः पित्राध्यापितो मुदा ।
अर्चनानाः सपुत्रोऽथ गत्वा नृपमयाजयत्(३) ।
यज्ञे च विततेऽपश्यद्राजपुत्रीं यशस्विनीम् ॥५२॥
स्नुषा मे राजपुत्री स्यादिति तस्य मनोऽभवत् ।
श्यावाश्वस्य च तस्यां वै सक्तमासीत्तदा मनः(४) ॥५३॥
संयुज्यस्व मया राजन्निति चाभ्यस्य सोऽब्रवीत् ।
श्यावाश्वाय सुतां दित्सुर्महिषीं स्वां नृपोऽब्रवीत् ॥५४॥
किं ते बुद्धिरहं कन्यां श्यावाश्वाय ददामि हि ।
ऋषिपुत्रो दुर्बलो हि जामाता नावयोरिति ॥५५॥
राजानमब्रवीत् सापि नृपर्षिकुलजा स्वहम् ।

---

(१) श्रुतिरिति ख० पुस्तकान्तरे च ।
(२) कार्य्यवन्तमिति ख० पुस्तकान्तरे च ।
(३) श्यावाश्वश्चात्रिपुत्रस्येति सार्द्धश्लोकः क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(४) एतच्छ्लोकार्द्धं क० ग० च० चिह्नितपुस्तकेषु न दृश्यते ।

---

(क) ऋ० ५, ६१, १९ । (ख) ऋ० ५, ६४, ७ । (ग) ऋ० ५, ६१, ५ ।

नानृषिर्नो हि जामाता नैष मन्त्रान् हि दृष्टवान् ॥५६॥
ऋषये दीयतां कन्या चेदृशी वा भवेत्तथा।
ऋषिं मन्त्रदृशं वेदपितरं मन्यते यतः[1] ॥५७॥
प्रत्याचष्टे स[2] तं राजा सह सम्मन्त्र्य भार्यया।
नानृषिर्नो न[3] जामाता कश्चिद्भवितुमर्हति ॥५८॥
प्रत्याख्यात ऋषिस्तेन वृत्ते यज्ञे न्यवर्तत।
श्यावाश्वस्य कन्यायां मनो नैव न्यवर्तत[4] ॥५९॥
ततः सुतौ[5] निवर्त्यांश्च तावेतावभिजग्मतुः[6]।
शशीयसी[क][7] तरन्त[ख]श्च पुरुमीळ्ह[ग][8]श्च पार्थिवम्[9] ॥६०॥
तरन्तपुरुमीळ्हौ[10] तु राजानौ वै ददृश्यृषी[11]।
ताभ्यामौ चक्रतुः पूजामृषिभ्यां नृपती[12] स्वयम् ॥६१॥

---

(१) श्यावाश्वाय सुतां दिशदित्यादिसार्द्धश्लोकत्रयं क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।
(२) प्रत्याचचक्षेति ख० ङ० पुस्तकान्तरे च।
(३) नैवेति ग०।
(४) न स्म निवर्तते इति ख० ङ० पुस्तकान्तरे च।
(५) ततस्तौ त्विति क० ग० घ० च०।
(६) ततः सुतौ निवर्त्य उभावेवाभिजग्मतुरिति ख० ङ० पुस्तकान्तरे च।
(७) शशीयसीति ख० पुस्तकान्तरे च।
(८) पुरुमीढमिति ङ०।
(९) यतस्त्रेत्यार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न पठितं।
(१०) तरन्तपुरुमीढाविति ख० पुस्तकान्तरे च।
(११) ददृशिवाविति क० घ० च०।
(१२) तु पतिरिति क० घ० च०।

---

(क) ऋ० ५, ६१, ९। (ख) ऋ० ९, १०४, ११। (ग) ऋ० ८, ७१, १४।

५७　महिष्याय दर्शयामास स(१) नृप ।
तरन्तानुमतेनैव(२) प्रादाद्बहुविधं वसु ॥६२॥
अजाविकं गवाश्वञ्च श्यावाश्वाय यशीयसी(३) ।
ऋषि(४) याच्यार्चितौ गत्वा पितापुत्रौ स्वमाश्रमम् ॥६३॥
अभ्यवादयतामर्षि(५) महर्षिं दीप्ततेजसम् ।
श्यावाश्वस्य मनस्यासीत्सन्तापाद्दर्शनादृतम् ॥६४॥
न लब्धवानिमां कन्यां हन्त सर्वाङ्गशोभनाम् ।
अप्यहं मन्त्रदर्शी स्यां भवेद्धर्षो महान् मम ॥६५॥
इत्यरण्ये चिन्तयत प्रादुरासीन्मरुद्गण(६) ।
ददर्श संस्थितान् पार्श्वे तुल्यरूपान्समात्मन(७) ॥६६॥
समानवयसश्चैव(८) मरुतो रुक्मवक्षसः ।
तांस्तुल्यवयसो दृष्ट्वा देवान् पुरुषविग्रहान् ॥६७॥
श्यावाश्वो विस्मितोऽपृच्छत्कोऽन्वेति(९) मरुतस्तदा ।

---

(१) वै इति ख० ङ० ।
(२) तरन्तानुमता चैवेति क० ग० घ० च० ।
(३) यशीयसीति ङ० पुस्तकान्तरे च ।
(४) तौ स्थिति पाठः साधुः ।
(५) अभ्यवादयतां तमिति ङ० पुस्तकान्तरे च ।
(६) ऋषिं याच्यार्चितौ गत्वेत्यादि प्रादुरासीन्मरुद्गणः इत्यन्तपाठ क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(७) तुल्यरूपानिवात्मनः इति क० ख० ग० घ० च० ।
(८) चैवमिति घ० पुस्तकान्तरे च ।
(९) के ष्ठेति पाठः समीचीनः । केष्ठेतीति क०, कोष्ठेतीति घ० ।

ततस्तु मरुतो देवानृषिस्तानन्वबुध्यत[१] ॥६८॥
य ईं वहन्त इत्यृग्भिः षड्भिः[२] स्तुष्टाव तांस्तथा ।
अतिक्रमं स्थितस्त्वृषिर्मेने विपुलमात्मनः ॥६९॥
यज्ञ[३] दृष्ट्वैव तुष्टाव यज्ञ[४] केष्ठेति[५] पृष्टवान् ।
गताः स्तुत्यानया प्रीता गच्छन्तः पृश्निमातरः[क] ॥७०॥
अवमुच्य स्ववक्षोभ्यो[६] रुक्मं तस्मै तदा ददुः ।
मरुत्सु तु प्रयातेषु श्यावाश्वस्तु महायशाः[७] ॥७१॥
रथवीतेर्दुहितरमगच्छन्मनसा तदा ।
स सद्य ऋषिरात्मानं विविदूरथवीतये[८] ॥७२॥
एतं मे स्तोममित्यृग्भ्यां[९] दौत्ये[१०] रात्रीं न्ययोजयत् ।
रथवीति तपस्यन्तं[११] सम्मेध्यार्पितं बहुधा ॥७३॥

---

(१) ततस्तूनबुध्यतेति क॰ ग॰ घ॰ च॰ ।
(२) षुड्भेति क॰ ग॰ घ॰ च॰ ।
(३) याम इति क॰ घ॰ च॰ ।
(४) यांश्चेति क॰ ग॰ घ॰ च॰ ।
(५) केष्टेतीति क॰, केष्ठेतीति घ॰ ।
(६) अमुच्य स्ववक्षोभ्यः इति ख॰, व्यामुच्यते स्ववक्षोभ्यः इति घ॰ ।
(७) महातपा इति ख॰ घ॰ पुस्तकान्तरेषु ।
(८) ममयाम्यथवीतये इति क॰ ग॰ घ॰ च॰ ।
(९) इत्याभ्यामिति क॰ ग॰ घ॰ च॰ ।
(१०) दूत्ये इति ख॰ पुस्तकान्तरेषु ।
(११) रथवीतिमथागम्यमिति ख॰ ङ॰ ।

(क) ऋ॰ ५, ५१, १॰ ।

[५] गर्भाणा दृष्ट तदनुमन्त्रणम् ।
भाववृत्त [illegible] तत्तस्यास्तथारूपं हि दृश्यते ॥८५॥
जरायुगर्भशब्दाभ्यामेतद्रूपं हि दृश्यते(१) ।
मह्ये उपस्थे(२) सावित्र युञ्जतेत्थावद्.(३) स्तुत. ॥८६॥
पर्जन्यो वर्तिति तस्मिन्(४) पृथिवी मध्यमा तु(५)वाक्(६) ।
यथा नो देवसवितरिव दु स्वप्नाग्निमौ(७) ॥८७॥
वारुणानु प्रशस्याजे पद्भ्मैन्द्राग्नमुत्तरम्(८) ।
विष्णुं न्यङ्ग(९)मस्मीति मारुत सूक्तमुत्तरम्(१०) ॥८८॥
एतया मरुदाख्यातं चौर्नेन्द्रे प्रतिपूर्व्वकम्(११) ।

---

(१) खवतामपि गर्भाणामित्यादिसार्द्धैकश्लोक क० ग० घ० च० चिह्नित० पुस्तकेषु नापद्यत ।
(२) मह्यौषधेतीति क० घ० च० ।
(३) सावित्रे युञ्जतेत्थेति वै इति क० ग० घ० च० ।
(४) पर्ज्जन्यस्तु वर्तिष्येतीति ङ० पुस्तकान्तरञ्च ।
(५) स्मिति ग० ।
(६) स्तुतेति ङ० पुस्तकान्तरञ्च ।
(७) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(८) उत्तरमित्यत्र उत्तममिति च०, इन्द्राग्नीन्द्राग्नमुच्यते इति ख०, मित्राग्नीन्द्राग्नमुच्यते इति ङ० पुस्तकान्तरञ्च ।
(९) विष्णुं चिरमिति ङ० पुस्तकान्तरञ्च ।
(१०) उत्तममिति ख० ।
(११) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।

श्रीसूक्तमाशीर्वादस्तु(1) स्त्रीपुत्राणां पराणि तु(2) । ८८॥
तस्यादा(3)वरस्यपनुद(4) मग्निस्तच(5) निपातभाक् ।
प्रजावान् जीवपुत्रो(6) वा गर्भकर्मणि संस्तुतौ ॥९०॥
नानारूपाः पयस्विन्य(7) संभवन्तीति संस्तुता(8) ।
आशीर्वादेषु संज्ञासु कर्मसंस्थास्तु देवताः(9) ॥९१॥
निपातभाग् लिङ्गवाक्यात्(10) परीक्षेतेह मन्त्रवित् ।
मन्त्रप्रयोगमन्त्रयोः(11) प्रयोगो(12) बलवत्तरः ॥९२॥

---

(१) आशीर्वादो स्यादिति ख०, आशीर्वादास्येति ङ० पुस्तकान्तरञ्च।
(२) स्त्रीपुत्राणां पराणि षट् इति क० घ० च०, षट् इति ग०, स्त्री-पुत्राणां पराणि षट् इति ङ० पुस्तकान्तरञ्च ।
(३) तस्यादेति क० घ० च० ।
(४) अस्यापनिर्नोदः इति क० घ० च०, स्यादाघलक्ष्मीं पतेर्नोदे इति ख०, अलक्ष्मीपनिर्नोदे इति ङ० पुस्तकान्तरञ्च ।
(५) स्तवेति ख० ङ० ।
(६) प्रजावञ्जीवपुत्र० इति क० ख० ग० घ० च०, प्रजावान् जीवपुत्रा इति ङ० ।
(७) पयस्विन्यः इति ख० ग० ।
(८) संस्तुताविति ङ० ।
(९) कर्मसंस्था तु देवतेति ख० ।
(१०) लिङ्गवाक्येति ख० ग० ।
(११) मन्त्रप्रयोगमन्त्राणामिति ग० ।
(१२) प्रयोगे इति ग० ।

विधेस्तयोः परीक्षा[१] स्यान्मन्त्राः स्युरभिधायकाः[२] ।
तस्मात्तेन विसंवादो मन्त्राणां तद्गतानि तु ॥९३॥
गुणाभिधायकानि स्युः सविज्ञानपदानि तु ।
मन्त्रेषु गुणभूतेषु प्रधानेषु च कर्मसु ॥९४॥
प्रधानगुणभूताः स्युर्देवता इति गम्यते ।
त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः ॥९५॥
आहरत्सहितः साध्यैर्विश्वैर्देवैः सहेति च ।
तत्र वाग्दीक्षणीयायामाजगामाशरीरिणी[३] ॥९६॥
तां दृष्ट्वा युगपत्तत्र कस्य च वरुणस्य च ।
शुक्रं चस्कन्द तद्वाभ्यामग्नौ प्राप्तं[४] यदृच्छया ॥९७॥
ततोऽर्चिर्भ्यो भृगुर्जज्ञे अङ्गारेभ्योऽङ्गिरा(क)[५] ऋषिः ।
प्रजापतिस्तुतौ दृष्ट्वा दृष्टा वागभ्यभाषत ॥९८॥
आभ्यामृषिस्तृतीयोऽपि भवेदत्रैव मे सुतः ।
प्रजापतिमपेत्युक्तः प्रत्यभाषत भारतीम् ॥९९॥
ऋषिरत्रिस्ततो जज्ञे सूर्यानलसमद्युतिः ।
योऽङ्गारेभ्य ऋषिर्जज्ञे तस्य पुत्रो बृहस्पतिः ॥१००॥

(१) परीक्षा इति ख० ।
(२) अभिधानका इति ग०, अभिधानिका इति ख० ।
(३) शरीरिणीति शुद्धः पाठः ।
(४) प्रास्यदिति ग०, प्राप्तेति ख० ।
(५) अङ्गारकाङ्गिरा इति ग०, अङ्गारेभ्योऽङ्गिरा इति ख० ।

(क) ऋ० १, ९९, १ ।

बृहस्पतेर्भरद्वाजो विदथीति[१] य उच्यते[२] ।
महत्त्वाद्वीहुरर्थंच[३] स एवाङ्गिरसो नपात्[क] ॥१०१॥
मधुचस्य तु तस्येदं[४] मण्डलं षष्ठमुच्यते ।
त्वं ह्यग्न इति तत्रादावाग्नेयानि त्रयोदश ॥१०२॥
सूक्तानि त्रीणि मूर्द्धानमग्निर्वैश्वानरस्य तु ।
एकान्नविंशतिश्चैव[५] पिबेत्यैन्द्राण्य[६]तः परम् ॥१०३॥
अग्ने यत्ते यदित्यस्यां द्वौ देवौ तु[७] निपातितौ ।
प्रीतये नूम[८] इत्येते वैश्वदेव्यावृचौ तु ते[९] ॥१०४॥
ऋग्द्वितीया यदद्याश्वमैन्द्रेणेति[१०] गवां स्तुतिः ।
आनस्तापास[ख] इत्यस्यां वायुरिन्द्रश्च संस्तुतौ[११] ॥१०५॥
इन्द्रः प्राधान्यतो वाच स्तुतो वायुर्निपातभाक् ।

---

(१) विदथीतीति ङ० ।
(२) भगवान् जीवपुत्रो वा इत्यादि विदथीति य उच्यते इत्यन्तपाठः क० ख० घ० चिह्नितपुस्तकेषु नोपलभ्यते ।
(३) भुवन्यस्येति क० घ० च०, गुरोर्यस्येति ख० ग० ।
(४) वत्सपुत्रस्य तस्यैतदिति क० ग० घ० च० ।
(५) एकान्नत्रिंशद्देवान्वेति ख०, एकान्नत्रिंशद्देवान्वेति ङ० । एकोनविंश-तिरिति भवितुमर्हति ।
(६) पिबन्त्यैन्द्राणीति पाठः शुद्धः ।
(७) देवौ याविति क० ग० घ० च० ।
(८) नम इति क० घ० च० ।
(९) एते इति घ० ।
(१०) चेमीति ग० ।
(११) इन्द्रवायू सह स्तुताविति घ० पुस्तकान्तरस्य ।

---

(क) ऋ० १, १०१, १ ।　(ख) ऋ० ६, ३७, २ ।

अयं देवमृचं सौम्यमैन्द्रमेके प्रचक्षते[1] ॥१०६॥
शरीरं चक्षुरित्यस्यां तृचोऽधीति[2] त्वचोः[क] स्तुतिः[3] ।
पितरं स्तौति पायु[ख]श्च तृचस्यान्ते पदे स्वयम्[4] ॥१०७॥
स्वादु[ग]ष्किलायमित्येताः पञ्चर्चः सौम्य एव वा[5] ।
इन्द्रः प्रधानतो वाच स्तुत. सोमो निपातभाक् ॥१०८॥
इन्द्रस्यैन्द्रनिपातोऽयं स्वयमैतरेयके[6] ।
अगव्यूति[घ] स्तौति देवान् पादो भूमिमथोत्तरः ॥१०९॥
बृहस्पतिं तृतीयोऽस्तौत्[7] त्विन्द्र[8]मेवोत्तमं पदम् ।
ऋषिस्तु तौ तथेत्युक्त्वा पायुं[ङ] पुत्रमभाषत ॥११०॥
अथर्वणीयौ शत्रूणां कुरुष्वेतौ[9] नृपाविति ।
पितरं स तथेत्युक्त्वा युद्धोपकरणं तयोः ॥१११॥
जीमूतस्येति[10] सूक्तेन पृथक्त्वेनाभ्यमन्त्रयत् ।

---

(१) इन्द्र प्राधान्यतो वाचेति श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(२) अधीतिरिति विसर्गयुक्तपाठः शुद्धः ।
(३) य आनयदिति तस्य तृचोऽधीति तनुस्तुतिरिति क० ग० घ० च० ।
(४) तृचस्यान्ते पदे स्वकमिति ख० ङ० पुस्तकान्तरयोः ।
(५) इति नु सौम्य मयश्च उशनः इति क० ग० च० ।
(६) इन्द्र प्रधानतो वाचेत्यादि स्वयमैतरेयके इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते । स्तूयते इति शुद्धः पाठः ।
(७) तृतीयस्त्विति क० ङ० पुस्तकान्तरयोः ।
(८) त्विन्द्रमिति पाठः साधुः ।
(९) कुरु युवेति घ० पुस्तकान्तरयोः ।
(१०) जीमूतो येनेति क० घ० च०, जीमूतस्येति ग० ।

---

(क) ऋ० ६, ४४, २२ । (ख) ऋ० १, २७, ६ । (ग) ऋ० ६, ४४, २१ ।
(घ) ऋ० ६, ४७, २० । (ङ) ऋ० ७, २, ७ ।

प्रथमा लग्न सूक्तस्य योद्धारं स्तौति वर्मिणम् ॥११२॥

धनुः स्तौति[1] द्वितीया तु तृतीया ज्याभिमन्त्रिणी[2]।

स्तौति चार्त्नी[(क)] चतुर्थी च[3]गिषुधिं स्तौति पञ्चमी ॥११३॥

अर्द्धेन[4] सारथिं षष्ठ्या रश्मयोऽर्द्धेन संस्तुताः।

अश्वांस्तु सप्तमी स्तौति आयुधागारमष्टमी ॥११४॥

नवमी रथगोपांस्तु दशमी रणदेवताः।

इषुमेकादशी[5] स्तौति द्वादशी कवचस्तुतिः ॥११५॥

त्रयोदशी कशां स्तौति हस्तत्राणं चतुर्दशी।

प्रथमे पञ्चदश्यास्तु पादे दिग्ध[6] इषुः स्तुतः[7] ॥११६॥

अयोमुखो द्वितीये तु अर्द्धेऽस्त्र[8] वारुणं परम्[9]।

षोडश्यां[10] लग्न सूक्तस्य धनुर्मुक्त इषुः स्तुतः ॥११७॥

सप्तदश्यां तु युद्धादिः[11]कवचस्य च बन्धन[12]।

---

(१) धनुरपीति क॰ ख॰ च॰।

(२) ज्याभिमन्त्रिणीति क॰ ख॰ च॰।

(३) स्तौत्युपार्त्नी चतुर्थी चेति क॰ ग॰ घ॰ च॰।

(४) अर्थेनेति क॰ घ॰ च॰।

(५) इषुधिश्चैकादशीति क॰ घ॰ च॰, इषुश्चैकादशीति ग॰।

(६) दिग्धः इति ग॰।

(७) इषुस्ततः इति ग॰ ङ॰।

(८) अर्द्धर्चमिति ख॰।

(९) परे इति ख॰।

(१०) षोडशीति क॰ ग॰ घ॰ च॰।

(११) युद्धदशीति क॰ घ॰ च॰, योद्धादेरिति ख॰।

(१२) बन्धन. इति क॰ ग॰ घ॰ च॰।

---

(क) ऋ॰ ६, ७५, ४।

स्तुतिरष्टादशी ज्ञेया युयुत्सोर्देवृगुत्तमा(१) ॥११८॥
आयास्ते चोत्तमे पादे ह्यृषि(२)रात्मन आशिष ।
सूक्तेनानेन स्तुत्वा सद्यामाशान्यृषिस्तयो ॥११९॥
तत(३) प्रस्थापयामास पुनर्वारशिखान्(४) प्रति ।
एतद्वयसे चतसृभी राज्ञो साहाय्यकाङ्क्षया ॥१२०॥
भरद्वाजोऽभितुष्टाव प्रीतस्तेन पुरन्दर ।
अभ्यावर्त्तिनमासाद्य हर्युपीयानदीतटे ॥१२१॥
वचितचायमानेन(क) जघानैतान् शचीपति(५) ।
एव(६) वारशिखा(७)ञ्जित्वा तावभ्यावर्त्ति(८)सार्ञ्जयौ(ख) ॥१२२॥
भरद्वाजाय गुरवे ददतुर्विविध वसु ।
भरद्वाजश्च गर्गश्च दृष्टाविन्द्रेण वै पथि ॥१२३॥
द्वौ च(९) प्रस्तोक(ग) इत्याभिर्दानं तस्मै(१०) प्रशंसतु ।

---

(१) स्तुतिरुत्तमेति क॰ ग॰ घ॰ च॰ ।
(२) ऋषिरिति ङ॰ ।
(३) तयोरिति क॰ ग॰ घ॰ ।
(४) वारशिखानिति ग॰ ।
(५) एतद्वयसे चतसृभिरित्यादि जघानैतान् शचीपतिरित्यन्तपाठ क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते ।
(६) वौ त्विति क॰ ग॰ घ॰ च॰ ।
(७) वारशिखानिति ग॰ ।
(८) ततोऽभ्यावर्त्तीति क॰ ग॰ घ॰ च॰ ।
(९) दयानिति क॰ ग॰ घ॰ च॰ ।
(१०) तद्दै इति क॰ ग॰ घ॰ च॰ ।

---

(क) ऋ॰ ६, २७, ८ । (ख) ऋ॰ ६, ४७, २५ । (ग) ऋ॰ ६, ४७, २२ ।

(१)प्रसङ्गादिह(२) याः सूक्ते देवताः परिकीर्त्तिताः ॥१२४॥
ता एव सूक्तभाजस्तु मेने राथीतरीसुतः(३)।
प्राजापत्यो मरीचिर्हि मारीचः कश्यपोऽभवत्(४) ॥१२५॥
तस्य देव्योऽभवञ्जाया(५) दाक्षायण्यस्त्रयोदश।
अदितिर्दितिर्दनुः काला दनायुः सिंहिका मुनिः(६)॥१२६॥
क्रोधावशा वरिष्ठा च सुरभिर्विनता तथा।
कद्रुश्चैवेति दुहितॄः कश्यपाय ददौ स च(७) ॥१२७॥
तासु देवासुराश्चैव गन्धर्वोरगराक्षसाः।
वयांसि च पिशाचाश्च जज्ञिरेऽन्याश्च जातयः ॥१२८॥
तत्रैका त्वदितिर्देवी द्वादशाजनयत्(८) सुतान्।
भगश्चैवार्य्यमांश(क)श्च मित्रो वरुण एव च ॥१२९॥

---

(१) ख० ङ० चिह्नितपुस्तकयोः पुस्तकान्तरे च, प्रसङ्गादिह या० सूक्ते इति श्लोकार्द्धात् प्राक्,—
ऋषिरप्यभितुष्टाव दानं तत्र च तस्य तु।
ऋचैकया द्वयोर्वापि दत्तं सङ्कीर्त्तयन् स्वयम्॥
इत्यधिकं पठितम्।
(२) प्रसङ्गा त्विहेति क० ग० घ० च०।
(३) राथीतरसुताविति क० घ० च०।
(४) मुनिरिति क० ग० घ० च०।
(५) जाता इति क० घ० च०।
(६) विशाविति ख०।
(७) चर्षिरित्यादिसार्द्धैकश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।
(८) द्वादशोऽजनयदिति क० ग० घ० च०।

---

(क) ऋ० २, १, ४।

धाता चैव विधाता च विवस्वांश्च महाद्युतिः ।
त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते[१] ॥१२०॥
द्वन्द्वं तस्मात्तु जज्ञे[२] मित्रश्च वरुणश्च ह[३] ।
तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीम् ॥१२१॥
रेतश्चस्कन्द कुम्भे तु[४] न्यपतद्[५]वासतीवरे ।
तेनैव तु मुहूर्तेन वीर्यवन्तौ तपस्विनौ ॥१२२॥
अगस्त्यश्च वसिष्ठश्च तत्रर्षी संबभूवतुः ।
बहुधा पतिते शुक्रे कलशेऽथ जले स्थले ॥१२३॥
स्थले वसिष्ठस्तु मुनिः सम्भूत ऋषिसत्तमः ।
कुम्भे त्वगस्त्यः सम्भूतो जले मत्स्यो महाद्युतिः[६] ॥१२४॥
उदियाय ततोऽगस्त्यः शम्या[क]मात्रो महायशाः[७] ।
मानेन सम्मितो यस्मात् तस्मान्मान्य इहोच्यते ॥१२५॥
यद्वा कुम्भादृषिर्जातः कुम्भेनापि हि[८] मीयते ।

(१) भगधेयार्धमाश्रयेत्यादिसार्धश्लोकः ग० ध० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(२) अजायतेति घ० ।
(३) मित्रश्च वरुणश्चेति क० ख० ग० घ०, चैवेति ख० ग० ।
(४) तत्कुम्भे इति ग० ङ० पुस्तकान्तरयोः ।
(५) न्यपतदिति ग० ङ० पुस्तकान्तरयोः ।
(६) बहुधा पतिते शुक्र इत्यादिना ईकपोत क० ग० ध० च० चिह्नित-पुस्तकेषु न पठितः ।
(७) महायशा इति ग० ङ० पुस्तकान्तरयोः ।
(८) कुम्भे मानेनेति क० ख० च० ।

(क) ऋ० १, ८०, ७ ।

शुभ इत्यभिधानन्तु परिमाणस्य लक्षणम्(१) ॥१२६॥
ततोऽस्य वृह्यमाणस्य वसिष्ठः पुष्करे स्थितः ।
सर्व्वतः(२) पुष्करं तत्र विश्वेदेवा अधारयन् ॥१२७॥
उत्थाय सलिलात्तस्मादस्य तेपे महत्तपः ।
नामास्य गुणतो जज्ञे वसतेः श्रेष्ठकर्मणः(३) ॥१२८॥
अदृश्यन्तृषिभिश्चेन्द्रं(४) सोऽपश्यत्तपसा पुरा ।
सोमभागानयो(५) तस्मै प्रोवाच हरिवाहनः ॥१२९॥
स्थपयो वा इन्द्रमिति ब्राह्मणात्तद्धि दृश्यते(६) ।
वसिष्ठस्य वसिष्ठाय(७) ब्राह्मणा वै ततोऽभवन् ॥१४०॥
सर्व्वकर्मसु यज्ञेषु दीक्षणीयास्ततोऽभवन्(८) ।
तस्माद्द्यापि(९) वासिष्ठाः सदस्यास्त्विह कर्म्मणि(१०) ॥१४१॥

---

(१) लभ्यते इति क० घ० च० ।
(२) सर्व्वेनेति क० ग० घ० च० ।
(३) श्रेष्ठकर्म्मणः इति पाठः साधुः । श्रेष्ठकर्म्मणेति ङ० पुस्तकान्तरञ्च ।
(४) चैन्द्रमिति ङ० पुस्तकान्तरञ्च ।
(५) सोमभागांस्ततः इति ख० ङ० पुस्तकान्तरञ्च ।
(६) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(७) वासिष्ठाय वसिष्ठस्येति पाठः सङ्गतः । वसिष्ठाय वसिष्ठायेति क० च०, वसिष्ठाय वसिष्ठायेति ग० घ० ।
(८) सर्व्वकर्म्मसु यज्ञेषु दक्षिणीयतमाश्चयेति क० घ० च० ।
(९) येऽद्यापीति क० ग० घ० च० ।
(१०) वसिष्ठाः सदस्याः स्युस्तु कर्हिचिदिति क० ग० घ० च० ।

अर्चयेद्(१) दक्षिणाभिस्तान् मानवेयी श्रुति(२)स्त्रियम्(३) ।
वसिष्ठ मैत्रावरुणिः सूक्तैः षोडशभिः परैः ॥१४२॥
तुष्टाव चाग्नि(क)मित्यग्निमामस्ताव जुषस्व नः(ख) ।
प्राग्नये(ग)ऽथ प्रसम्राजो(घ) द्वितीयं प्राग्नये(ङ) वृषम् ॥१४३॥
वैश्वानरीयाण्येतानि(४) त्वे हे(च)न्द्राणि पराण्यतः ।
दश पञ्च च सूक्तानि निपातो मरुतां स्तुतिः ॥१४४॥
भक्तिः सुदास(छ) इत्यस्यां दानं पैजवनस्य तु ।
वसिष्ठेन चतुर्थ्यमि(५)र्द्वे नप्तु(ज)रिति कीर्त्तितम् ॥१४५॥
संवादः सूक्तमैन्द्रं(६) वाग्निन्यं नप्तु(७) प्रपद्यते ।
वसिष्ठागस्त्ययोश्च कीर्त्यते तनयैः सह ॥१४६॥
इन्द्रेण चैव संवादो महिमा जन्म कर्म च ।

---

(१) पूजयेदिति ख० ङ० पुस्तकान्तरञ्च ।
(२) स्तुतिरिति क० घ० च० ।
(३) स्त्रियं मानवी श्रुतिरिति ख० ङ० ।
(४) वैश्वानरीयमित्येतदिति क० घ० च० ।
(५) चतुर्भिस्त्विति क० ग० घ० च० ।
(६) संवादमैन्द्रसूक्तमिति ङ० पुस्तकान्तरञ्च, संवादे सूक्तमैन्द्रे इति ख० ।
(७) वाग्निन्य वक्तिति क० ग० घ० च० ।

---

(क) ऋ० ७, १, १ । (ख) ऋ० ७, २, १ । (ग) ऋ० ७, ५, १ ।
(घ) ऋ० ७, ६, १ । (ङ) ऋ० ७, १३, १ । (च) ऋ० ७, १८, १ ।
(छ) कुम्भे नावो ३, १० । (ज) ऋ० ७, १८, २२ ।

पराणि प्रे(क)ति चत्वारि वैश्वदेवानि यानि(१) तु ॥१४७॥
स्तौत्यृगन्त्या(ख)महिं तत्र मानो(ग)ऽहिर्बुध्न्य(घ) एव च ।
अहिराहन्ति मेघान् स एति वा तेषु मध्यमः ॥१४८॥
योऽहिः स बुध्न्यो बुध्नेति सोऽन्तरिक्षेऽभिजायते(२) ।
उदु ष्य(ङ) सवितुः सूक्तं(३) मन्त्रो (च)वाजिनदेवताः(४) ॥१४९॥
तृचो(५)ऽर्द्धर्चस्य पादोऽत्र प्रथमायामृचि स्तुतः(६) ।
पादश्चैव तृतीयोऽत्र प्रथमायामृचि स्तुतः(७) ॥१५०॥
यथार्द्धर्चो भगस्तुत(छ)स्तथा नूनं भगो(ज)ऽपि च ।
स हि रत्नानि सविता सुवातीति भगः स वा(८) ॥१५१॥

---

(१) तत्रेति ख० ङ० पुस्तकान्तरञ्च ।
(२) अहिराहन्तीत्यादि सोऽन्तरिक्षेऽभिजायते इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(३) सूक्ते इति ख० ङ० ।
(४) वाजिनदेवत इति ख० ङ० पुस्तकान्तरञ्च ।
(५) तृचः इति ग० ।
(६) तृचोऽर्द्धंच भागोऽत्र भगस्तुत इति श्रुतिरिति ख० ङ० पुस्तकान्तरञ्च । श्रुतिरित्यत्र स्तुतः इति ग० ।
(७) पञ्चम्यामहिदैवतः इति क० ग० घ० च० ।
(८) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नापश्यत ।

---

(क) ऋ० ७, ३६, १ । (ख) ऋ० ७, ३४, १६ । (ग) ऋ० ७, ३४, १७ । (घ) ऋ० ७, ३४, १७ । (ङ) ऋ० ७, ३८, १ । (च) ऋ० ७, ३८, ७ । (छ) ऋ० ७, ३८, ६ । (ज) ऋ० ७, ४१, ५ ।

वैश्वदेवानि पञ्चोर्ध्वं पञ्चर्चो भगदेवता।[१]
प्रातर्जित[क]मुपसेऽन्या द्रष्टुं स सौत्याग्नि[२]रेव वा ॥१५२॥
एके [illegible] प्रात[ख]रित्यस्यां भगमेव[३] प्रचक्षते।
आद्यान्ये ते तु ऋषयः कीर्त्तयन्ति[४] प्रयत्नतः ॥१५३॥
ऋक्षेषु[५] देवता मान्या मान्यास्तत्र स्तुवन्ति[६] च।
सालोक्यात्[७]सारूप्यादा संस्तवादथ वा पुनः ॥१५४॥
गणस्थानाद्भक्तितो वा कीर्त्यन्तेऽन्यास्तु देवताः।
दाधिक्रमथ सावित्रं रौद्रमित्यनुपूर्व्वशः ॥१५५॥
दधिक्रां[ग] प्रथमायान्तु[८] देवताः परिकीर्त्तिताः।
ता ज्ञेया आप[घ] आप्यं स्यादार्भवः प्रथमस्तृचः ॥१५६॥
उत्तमा वैश्वदेवी वा आर्भवी वा निगद्यते[९]।

---

(१) पञ्चोर्ध्वं पञ्चर्चो भगदैवत इति क० ख० ग० घ० च०।
(२) सत्यं सौत्याग्नीरिति ग० घ० च०, बृहत्यावाप्नोरिति छ० पुस्तकान्तरच।
(३) प्रातरित्येतां भगमेवेति ख० छ० पुस्तकान्तरच।
(४) आद्यान्येषु तु ज्ञेयु तु यस्कीर्त्तयन्तीति छ० पुस्तकान्तरच।
(५) ऋक्षेऽक्षिमिति ख० ग० छ० पुस्तकान्तरच।
(६) स्तव्या अन्यास्तत्र भवन्तीति ख० ग० छ० पुस्तकान्तरच।
(७) काशादेति ख० छ० पुस्तकान्तरच।
(८) प्रथमायान्विति क० ग० घ० च०।
(९) वैश्वदेवो तु समुद्रज्येष्ठेत्यस्यां स्तुतिरिति क० घ० च०।

---

(क) ऋ० ७, ४१, २। (ख) ऋ० ७, ४१, १। (ग) ऋ० ७, ४४, १। (घ) ऋ० ७, ४७, १।

वैश्वदेवे तथा प्रस्त(१) आर्भवं शस्यते हि तत् ।
दंगमेऽह्नि समस्ताश्च समुद्रज्येष्ठा(क)अपां स्तुतिः(२) ॥१५७॥

इति वृहद्देवतायां पञ्चमोऽध्यायः ।

---

(१) प्रास्ते इति ग० ।
(२) वैश्वदेवे तथा प्रस्त इत्यादि स्तुतिरित्यन्तपाठः क० ख० घ० चिह्नित-पुस्तकेषु न विद्यते।

---

(क) ऋ० ७, ४९, १ ।

क्रन्दन्त सारमेय स धावन्त द्रष्टुमुद्यत ॥१२॥
यदर्जुने[क]ति च त्रिभिः सान्त्वयित्वा व्यसुष्वपत्[१] ।
स तं[२] प्रस्वापयामास जनमन्यञ्च वारुणम् ॥१३॥
ततस्तु वरुणो राजा स्वान् पाशान् प्रत्यमुञ्चत[३] ।
स बद्ध[४] पितरं सूक्तैस्त्रिभिरित उत्तरै[५] ॥१४॥
अभितुष्टाव धीरे[ख]ति सुमोचैनन्ततः पिता ।
ध्रुवासु त्वे[ग]ति चोक्तायां पाशा अस्मात्ममोचिरे[६] ॥१५॥
पराणि त्रीणि सूक्तानि वायव्यानि प्रवीरया[घ] ।
अत्र तास्त्वे[७]न्द्रवायव्या ऋचो[८] यासु[९] द्विषन्नुति ॥१६॥
प्रवीरयोक्ता वायव्या' आ तु[१०] गौत्यैतरेयके ।

---

(१) क्रन्दन्तमित्यादि सान्त्वयित्वा व्यसुष्वपदित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(२) स्वमिति ख० ङ० पुस्तकान्तरे च ।
(३) स्वे पाशे प्रत्यबध्यत इति क० ग० घ० च० ।
(४) बुद्धेति क० घ० च ।
(५) अत्र स वाक्ये पाशे ध्रुवा सत्येति दृश्यते इति ख० ङ० पुस्तकान्तरे च ।
(६) मुमुचिरे इति पाठः शुद्धः ।
(७) चेति ख० ङ० पुस्तकान्तरे च ।
(८) सुतावितिं क० ग० घ० च० ।
(९) यास्त्विति ख० ङ० पुस्तकान्तरे च ।
(१०) प्रास्विति ख० ।

---

(क) ऋ० ७, ५५, २ । (ख) ७, ८६, १ । (ग) ऋ० ७, ८८, ७ ।
(घ) ऋ० ७, ९०, १ ।

सरस्वतीं प्रपद्यस्व मा त्वा(१) वक्ष्यति नाङ्गप ॥२२॥
तथेत्युक्त्वा जगामाशु आपगा(२) स सरस्वतीम् ।
सा चैनं प्रतिजग्राह दुदुहे च पयो घृतम्(३) ॥२३॥
एतदत्यद्भुतं कर्म सरस्वत्या नृप प्रति ।
वाक्पि(४) कीर्त्तयामास प्रथमस्य द्वितीयया ॥२४॥
द्वे बार्हस्पत्ये ऐन्द्रे च(५) वैष्णवे तु(६) परे ततः ।
उत्तमैन्द्रश्च तिस्र(क) स्तु(७) पार्जन्ये तिस्र उत्तरे ॥२५॥
आग्नीध्रंक् प्रथमा तत्र प्रथमस्य तृतीयया ।
यज्ञे चाथेन्द्रमेवासीदन्यया त्विन्द्राबृहस्पती(८) ॥२६॥
तृतीया नवमी चैव कौतीन्द्राब्रह्मणस्पती(९) ।

---

(१) ते इति ख० ङ० पुस्तकान्तरञ्च ।
(२) जगामाथ मावनीमिति ख० ङ० पुस्तकान्तरञ्च ।
(३) प्रतिजग्राह सा चैनं पय सर्पिश्च दुग्धवीति क० ग० घ० च० ।
(४) वाचस्य इति ख० ।
(५) ऐन्द्रे यज्ञे दिव सूक्ते इति क० घ० च०, यज्ञे बार्हस्पत्यमैन्द्रमिति ग० ।
(६) चेति ख० ङ० पुस्तकान्तरञ्च ।
(७) इन्द्रो द्वितीयोत्तमैन्द्रेति क० घ० च० ।
(८) आग्नीध्रंक् प्रथमा तत्रेत्यादि यज्ञे त्विन्द्रा बृहस्पती इत्यन्तपाठ क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते । तेषु चास्मिन् स्थले, कौतीन्द्र प्रथमा तत्र द्वितीयाद्या बृहस्पति । इति श्लोकार्द्धं वर्त्तते ।
(९) सहेन्द्राब्रह्मणस्पती इति ख० ङ० पुस्तकान्तरञ्च ।

(क) ऋ० ७, १०१, १ ।

संवत्सर(क)न्तु माण्डूकमैन्द्रासोमं(१) परन्तु यत् ॥२७॥
ऋषिर्ददर्श रक्षोघ्नं(२) पुत्रशोकपरिप्लुतः ।
हते पुत्रशते क्रुद्धः सौदासैर्दुःखितस्तदा(३) ॥२८॥
ये पाकशंस(ख)मित्यृक् सौम्या(४) आग्नेयी तत उत्तरा ।
एकादशी वैश्वदेवी सौम्यस्तस्याः परो द्विषः(५) ॥२९॥
यदि वाह(ग)मित्याग्नेयी ऐन्द्री यो मे(घ)ति तु स्मृता(६) ।
वायव्यौ प्रयाजिगाती(ङ)ति वितिष्ठध्वं(च) तु मारुती ॥३०॥
प्रवर्त्तये(छ)ति पञ्चैन्द्र्य ऐन्द्रासोमीत्यृगुत्तमा ।
ऋषिस्त्वाग्निपमायासे मा नो रक्ष(ज) इति त्वृचि(७) ॥३१॥
दिवश्चैव पृथिव्याश्च तथा पाप्मनमात्मनः ।
उलूक यातुं(झ)(८) जहीत्याशानाशपास्मिन्मापरान्(९) ॥३२॥

---

(१) मण्डूका इन्द्रासोममिति ख० ङ० पुस्तकान्तरञ्च ।
(२) राक्षोघ्नमिति क० ग० ङ० च० ।
(३) एतच्छ्लोकार्द्धं क० ग० च० चिह्नितपुस्तकेषु नेष्यते ।
(४) सौम्याविति ङ० ।
(५) द्विष इति ग० ।
(६) यो मेतीन्द्रः स्तुतोऽर्द्धर्चेति ङ० पुस्तकान्तरञ्च ।
(७) त्वृचे इति क० ग० च० ।
(८) यात्विति क० ख० ग० घ० च०, यान्त्विति पुस्तकान्तरम् ।
(९) एष श्लोकः क० ग० च० चिह्नितपुस्तकेषु नेष्यते ।

---

(क) ऋ० ७, १०३, १ । (ख) ऋ० ७, १०४, ८ । (ग) ऋ० ७, १०४, १४ । (घ) ऋ० ७, १०४, १६ । (ङ) ऋ० ७, १०४, १७ । (च) ऋ० ७, १०४, १८ । (छ) ऋ० ७, १०४, १९ । (ज) ऋ० ७, १०४, २३ । (झ) ऋ० ७, १०४, २२ ।

पञ्चदश्यान्तु सूक्तस्याष्टम्यां(१) चैव वारुणिः ।
दुःखशोकपरीतात्मा जपते विलपन्निव ॥२३॥
हते पुत्रशते तस्मिन्(२) वसिष्ठो दुःखितस्तदा ।
रक्षोभूतेन सौदासेनेति नः श्रुतं(३) ॥२४॥
कण्वश्चैव प्रगाथश्च घोरपुत्रौ बभूवतुः ।
गुहया तावनुज्ञातावूषतुः सहितौ वने ॥२५॥
वसतोश्च तयोस्तत्र कण्वपत्न्याः शिरःस्पृशत्(४) ।
हत्वा कनीयान् कण्वस्योत्सङ्गमवबुध्यत(५) ॥२६॥
मन्युमांस्तं तदा कण्वः क्रुद्धः पापाभिशङ्कया ।
बोधयामास पादेन दिधक्षन्निव तेजसा ॥२७॥
विदित्वा तस्य तं भावं प्रगाथः प्राञ्जलिः स्थितः ।
मातृत्वे च पितृत्वे च वरयामास तावुभौ ॥२८॥
स पौरो(६) वाथ काण्वो वा वंशजैर्वेङ्गभिः पितुः ।
ददर्शान्यैश्च सहितः ऋषिर्मण्डलमष्टमम् ॥२९॥

---

(१) षष्ट्यामिति क॰ ग॰ घ॰ च॰ ।
(२) पुत्र इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(३) वै श्रुतिरिति क॰ ग॰ घ॰ च॰ ।
(४) शिरोऽस्पृशादिति क॰ घ॰ च॰ । शिरःस्पृशदिति ख॰ ग॰ ।
(५) उत्सङ्गेनावबुध्यतेति क॰ घ॰ च॰ । कण्वस्योत्सङ्गेन त्ववबुध्यतेति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(६) घोर इति क॰ ख॰ घ॰ च॰ ।

माचिदै[क]न्द्राणि चत्वारि अन्वस्य स्थूर[ख]मित्यृचि ।
तुष्टावाङ्गिरसी नारी वसन्तौ[१] प्रयती[ग] पतिम् ॥४०॥
स्त्रियं सन्तं[२] पुमांसन्तमासङ्गः स्तुतवानृषिः[३] ।
तस्य[४] दानं स्तुतौ[घ]त्वृग्भिश्चतुर्भिः परिकीर्त्तितम् ॥४१॥
शिक्षे[ङ]त्यृग्भ्यां तु काण्वस्य विभिन्दोः परिकीर्त्तितम् ।
पाकस्थाम्नस्तु[५] भोजस्य चतुर्भिर्यमिति[च] स्तुतम् ॥४२॥
पौष्णौ प्रेति[छ] प्रगाथौ द्वौ[६] मन्यते शाकटायनः ।
ऐन्द्रमेवाद्य पूर्वन्तु गालवः पौष्णमुत्तरम्[७] ॥४३॥
ऐन्द्राणामिह सूक्तानामुत्तमस्योत्तमे तृचे ।
दानं राज्ञः कुरुङ्गस्य स्थूरं राध[ज] इति स्तुतं ॥४४॥
दूरा[झ]दित्याश्विने सूक्ते सप्तर्षिमस्तामे[ञ] यथा ।

---

(१) वसन्ताविति ख० । वसताविति ङ० ।
(२) प्रयन्तमिति ग० ।
(३) मासं तं हतयाङ्गिरिरिति क० पुस्तकान्तरञ्च ।
(४) तस्येति ख० ङ० पुस्तकान्तरञ्च ।
(५) चेति ख० ङ० ।
(६) त्विति ख० ङ० पुस्तकान्तरञ्च ।
(७) उत्तममिति ङ० ।

---

(क) ऋ० ८, १, १ । (ख) ऋ० ८, १, ३४ । (ग) ऋ० ८, १, ३४ ।
(घ) ऋ० ८, १, ३० । (ङ) ऋ० ८, २, ४१ । (च) ऋ० ८, ३, २१ ।
(छ) ऋ० ८, ४, १५ । (ज) ऋ० ८, ४, १९ । (झ) ऋ० ८, ५, १ ।
(ञ) ऋ० ८, ५, ३० ।

आगन्म(क) मारुतं सूक्तं वय(ख)मित्यैन्द्रमुत्तरम्(१) ॥५७॥
काण्वस्य सौभरे(२)श्चैव यजतो वशजे(३) सह ।
कुर्वाते यत्नान् जजुर्हवींषि विविधानि च ॥५८॥
आस्तुत्य(४) सोऽभितुष्टाव इन्द्रश्चैव सरस्वतीं ।
इन्द्रो वे(ग)त्यनयर्चा स दानमस्मै प्रकाशयन् ॥५९॥
आस्तुराजोऽभिमानाच्च प्रदर्शितमना स्वयम्(५) ।
स स्तुतो(६) देववच्चित्र(घ) ऋषये तु गवां ददौ(७) ॥६०॥
अयुतानां सहस्रं वै निर्गधाय स्तवमृषि ।
ऋषिश्चोवाच(८) महात्मा नाहमर्हाम्यृषे स्तुतिम् ॥६१॥
तिर्यग्योनौ समुत्पन्नो(९) देवता(१०) स्तोतुमर्हसि ।

---

(१) वयमैन्द्रमत परमिति ख० ङ० पुस्तकान्तरे च ।
(२) सौभरेरिति क० ग० घ० च० ।
(३) वशजैरिति क० ख० च० ।
(४) आस्तुत्य इति ख० ङ० पुस्तकान्तरे च ।
(५) इन्द्रोवेत्यनयर्चा स इति श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नालोक्यते ।
(६) संस्तुत इति ख० ग० ङ० पुस्तकान्तरे च ।
(७) यद्ददौ तद्गुणेन चेति ङ० पुस्तकान्तरे च ।
(८) प्रोवाचेति ख० ।
(९) समुद्भूत इति ख० ङ० पुस्तकान्तरे च ।
(१०) देव मा इति ग० ।

---

(क) ऋ० ८, २०, १ । (ख) ऋ० ८, २१, १ । (ग) ऋ० ८, २१, १७ ।
(घ) ऋ० ८, २१, १८ ।

तमन्वया पुनश्चात्मौदौत्य(क) सूक्तेन चाश्विनौ[१] ॥६२॥
इति(ख) स्वेत्येतदाग्नेयं सख्यायैन्द्रमुत्तरम्[२] ।
यथा वरः सुसाम्ने (ग)उत्तमश्चौषधस्तुच ॥६३॥
अष्टौ तु सहिता एता देवता विभिदुर्वसम् ।
उषाश्चेन्द्रस्य सोमश्चाथाग्नि. सूर्यो बृहस्पतिः ॥६४॥
अङ्गिराः सरमा चैव ता या(घ)मित्युत्तरस्य तु ।
आद्यौ मैत्रावरुण्यस्तु[३] नव द्वादश तूत्तराः ॥६५॥
वैश्वदेव्यो बहुराजा पश्चादाद्वृषये वसु ।
इन्द्रो वेत्येतयर्चा तु दानशक्तिप्रकाशनम्[४] ॥६६॥
कीर्त्तितं[५] तु ऋषे तस्मिन्नृज्र(ङ)मुचथ्यायने ।
अश्विनौ ददतुः प्रीतौ तदिहोक्तं सुसामनि[६](च) ॥६७॥

---

(१) स्तुत्वा पित्र सूक्ते यदैश्विमिरिति क० घ० च० ।
(२) उत्तममिति ख० एतच्छ्लोकार्द्धं क० ग० घ० चिह्नितपुस्तकेषु न पठितम् । तेषु अस्मिन् स्थले, अश्विनावग्निमिन्द्रश्च चाभिष्टुयाव देवता । एतच्छ्लोकार्द्धं वर्त्तते ।
(३) मित्रावरुण्य इति ख० ङ० ।
(४) एतच्छ्लोकार्द्धं ख० ग०ङ० चिह्नितपुस्तकेषु नापश्यत ।
(५) कीर्त्तनमिति ङ० पुस्तकान्तरस्य ।
(६) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।

---

(क) ऋ० ८, २२, १ । (ख) ऋ० ८, २३, १ । (ग) ऋ० ८, २४, २८ । (घ) ऋ० ८, २५, १ । (ङ) ८, २४, २२ । (च) ऋ० ८, २५, २२ ।

आश्विनं तु युवो[क]र्युञ्ज[ख] वायव्या उत्तरास्तु याः।
यं सवर्णमनुर्नाम लेभे पुत्त्रं विवस्वतः ॥६८॥
वैश्वदेवानि पञ्चैतान्यग्निरुक्थे[ग] जगाद सः[1]।
बभ्रुरेक[घ] इति त्वस्मिंस्त्रिष्टुभो[2] द्विपदा दश ॥६९॥
स्तूयन्ते देवता ह्यासु कर्मभिः[3] स्वैः पृथक् पृथक्।
स्तुताः कर्मगुणैः स्वैः स्वैर्देवता यत्र यत्र तु ॥७०॥
पृथक् कर्मस्तुतिर्नाम वैश्वदेवन्तदेव तु[4]।
तासामभ्रुरिति त्वाद्या सौम्याग्नेयी त्वनुत्तरा ॥७१॥
त्वाष्ट्री चैन्द्री [illegible] रौद्री च पौष्णी वैष्णव्यथाश्विनी।
नवमी मैत्रावरुण्यृद्दशमी मित्रसंस्तवा ॥७२॥
यजमानप्रसङ्गाच्च यजिरेवात्र संस्तुता।
यो यजाति[ङ]इत्यृचे प्रक्तो यजतां पतिरीरितः ॥७३॥
तस्य द्युमान्[च] इत्यृचे यज्वा चतसृष्वपि मह्नि[छ]ति।

---

(१) वैश्वदेवानि सूक्तानि जगादाग्निरिति स्वयमिति क० घ० च०।
(२) त्वेता स्त्रिष्टुभ इति ख० [illegible]० ङ० पुस्तकान्तरेषु।
(३) ह्यासां नवभिरिति क० घ० च०।
(४) पृथक् कर्मस्तुतेर्युक्तं तद्विधाद्वैश्वदेवतमिति ख० ङ० पुस्तकान्तरेषु।

---

(क) ऋ० ८, २६, १। (ख) ऋ० ८, २६, २०। (ग) ऋ० ८, २७, १। (घ) ऋ० ८, २८, १। (ङ) ऋ० ८, ३१, १। (च) ऋ० ८, ३१, २। (छ) ऋ० ८, ३१, १५।

यज्ञनोरेव दम्पत्योः पश्च या(क) दम्पतीत्यृचः ॥७४॥
आ शर्म्म(ख) गौरेतु(ग) पौष्णौ परे मित्रार्य्यमा यथा(घ) ।
वरुणश्च सुनस्त्वच आदित्या अग्नि(ङ)मग्नये(१) ॥७५॥
सूक्तानि मरुतानो(च)ति चौर्ष्णेन्द्राणि पराण्यतः ।
अथ(छ) इत्यच कन्या तं स्त्रीलिङ्गेनेन्द्रमब्रवीत् ॥७६॥
स हि तां कामयामास दानवीं पाकशासनः ।
ज्येष्ठां स्वसारं पुंसश्च(२) तस्यैव वधकाम्यया(३) ॥७७॥
अग्निने(ज)त्याश्विनं सूक्तमैन्द्रे सूक्ते परे ततः ।
ऐन्द्राग्न्यात् परमाग्नेयमैन्द्राग्न्यादारुणे(४) परे ॥७८॥
उत्तरे वरुणे त्वम्य आ वा(झ)मित्याश्विनस्तृचः ।
सूक्ते इमे(ञ) समाग्नेये(५) ताभ्यामैन्द्रे ततः परे(६) ॥७९॥

(१) यो यजाति इचे भक्त इत्यादिसार्द्धश्लोकद्वयं क० ग० घ० च० चिह्नित० पुस्तकेषु नापश्यत ।
(२) प्युरुस्येति क० घ० च०, शंसस्येति ख० पुस्तकान्तरश्च।
(३) युवकाम्ययेति ख० ग० ङ० पुस्तकान्तरश्च ।
(४) ऐन्द्राग्नं परमाग्नेयमैन्द्राग्नं वारुणे इति क० घ० च० । वारुणे इत्यत्र वारुणमिति ग० ।
(५) इमे तु चाग्नेये इति क० घ० च० ।
(६) ताभ्य मैन्द्रेति चोत्तरे इति क० ग० घ० च० ।

(क) ऋ० ८, ३१, ५। (ख) ऋ० ८, ३१, १०। (ग) ऋ० ८, ३१, ११। (घ) ऋ० ८, ३१, १३। (ङ) ऋ० ८, ३१, १४। (च) ऋ० ८, ३२, १। (छ) ऋ० ८, ३३, १९। (ज) ऋ० ८, ३५, १। (झ) ऋ० ८, ४२, ४। (ञ) ऋ० ८, ४३, १।

वयमायात्याय[१]यत्[२]आदात्काणीनस्तु पृथुश्रवा ।
तदु च सस्तुत दानमास[क] इत्येवमादिभि[३] ॥८०॥
प्रात[ख] प्रगाथौ वायव्य सूक्तस्योपोत्तमा च या ।
भिचार्य्यमाणौ मरुत सुनीथोघ[ग]दृचे स्तुता ॥८१॥
द्विषत्वारिग्रकाम्भीत[४] स्त्रिग्धोकाय पुरन्दर ।
गिरिं निहत्य वज्रेण गा इदावसुरैर्हृता ॥८२॥
य[घ] इन्द्रादिति चैतस्मान्त्वपिस्तु स्वयमब्रवीत्[५] ।
स्तुता नवम्या त्वदितिर्महो[ङ]त्यादित्यदेवते[६] ॥८३॥
अन्या पञ्चोपयेऽपि तु सौम्य स्वादो[च]रिति स्तुतम् ।
परास्त्वष्टौ तु[७] सूक्तानि चयोषा तिग्मतेजसाम् ॥८४॥

---

(१) वयामाख्यायेति घ॰ ।
(२) वयाम्याय वयदिति ङ॰ ।
(३) आदिनेति ख॰ ङ॰ पुस्तकान्तरस्थ ।
(४) प्रात इति ङ॰ पुस्तकान्तरस्थ ।
(५) भिचार्य्यमाणौ मरुत इत्यादि त्वपिस्तु स्वयमब्रवीदित्यन्तपाठ क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते ।
(६) चापीति क॰ घ॰ च॰ ।
(७) पराश्चि चाष्टाविति ख॰ ङ॰ पुस्तकान्तरस्थ ।

---

(क) ऋ॰ ८, ४६, २१ । (ख) ऋ॰ ८, ४६, २५ । (ग) ऋ॰ ८, ४६, ३ । (घ) ऋ॰ ८, ४६, २० । (ङ) ऋ॰ ८, ४७, १ । (च) ऋ॰ ८, ४८, १ ।

ऐन्द्राण्यभि[क] तु षड्विंशः प्रगाथो बहुदेवतः ।
ऋगन्त्याग्नेरचेत्य[ख]ग्निः सूर्य्यमन्त्यपदा[१] जगौ[२] ॥८५॥
प्रस्कण्वस्य पृषध्रस्य[३] प्रादाद्यदस्तु किञ्चन ।
तद्दूरो[ग]दिति सूक्ताभ्यामखिलन्त्विह संस्तुतम्[४] ॥८६॥
ऐन्द्राण्युभय[घ]मित्यृच षडाग्नेयात् पराणि तु[५] ।
निपातमाह[६] देवानां दाता न[ङ] इति भागुरिः ॥८७॥
ऋचे[७]यास्कस्तृचन्त्वेतं[८] मन्यते वैश्वदेवतं ।
आदित्यदैवतं सूक्तं त्यान्नु[च]त्यच्च परन्तु यत् ॥८८॥
धीवराः सहसा मीनान् दृष्ट्वा सारस्वते जले ।

(१) अन्त्यं पदमिति ङ० पुस्तकान्तरञ्च ।
(२) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते । तेषु अस्मिन् स्थले, अन्वेत्यग्निरिति तस्मात्ततोऽग्निः सूर्य्यं एव तु । इति श्लोकार्द्धमस्ति ।
(३) त्विति ङ० ।
(४) परिकीर्त्तितमिति ख० ङ० पुस्तकान्तरञ्च ।
(५) श्लोकार्द्धमेतद् ख० ङ० चिह्नितपुस्तकयोर्न विद्यते ।
(६) निपातानाहेति ग०, निपातेनेहेति ङ० पुस्तकान्तरञ्च ।
(७) ऋचमिति ग० ।
(८) यास्कोऽस्मेऽर्द्धं तृचं चैनमिति ङ० ।

(क) ऋ० ८, ४८, १ । (ख) ऋ० ८, ५६, ५ । (ग) ऋ० ८, ५५, १ । (घ) ऋ० ८, ६१, १ । (ङ) ऋ० ८, ६५, १० । (च) ऋ० ८, ६७, १ ।

जाल प्रक्षिप्य तान् बद्धोदक्षिपन् सलिलात् त्वमम् ॥८९॥
शरीरपातभीतास्ते तुष्टुवुस्त्वादिते सुतान्।
मुमुचुस्तांस्ततस्ते च प्रसन्नास्तान् समूदिरे ॥९०॥
धीवरा युष्मच्च मा वो भूत्स्वर्गं प्राप्स्यथेति च(१)।
उते(क)ति माता चैवैषां त्वष्टेनाभिष्टुतादिति ॥९१॥
मातृत्वाद्गर्भसम्बन्धात्(२) स्तुयेतैवा(३) सुतौ स्तुतौ।
ऐन्द्राग्न्या त्वा रथ(ख) चौषि स्तौत्यृद्धुपसे(ग)ति षट् ॥९२॥
आर्चाश्वमेधयोरच पञ्चदानस्तुति परा।
अपा(घ)दिन्द्रस्य चाग्नेश्च विशेषां चैव यस्तव ॥९३॥
तृचस्य प्रथमोऽर्द्धर्च्चे प्रैषा वरुणदेवता(४)।
त्व(ङ)माग्नेयेऽप वा सूक्ते उत्तरे(५) हविषां स्तुति ॥९४॥
पय पश्वोषधीनाञ्च(६) तथा रूप हि दृश्यते।

---

(१) धीवरा यष्वा मौगामित्यादि सार्द्धश्लोकद्वय क० ग० घ० च० चिह्नितपुस्तकेषु नापश्यत।
(२) मातृत्वादतिसम्बन्धादिति क० च०, मातृत्वादभिसम्बन्धादिति ग० मातृत्वादिति सम्बन्धादिति घ०।
(३) सुवन्त्येनामिति ख० ङ० पुस्तकान्तरयोः।
(४) प्रैषो वरुणदैवत इति ख० ग० ङ०।
(५) उत्तममुत्तरमिति क० ग० घ० च०।
(६) चेति ख० ङ०।

---

(क) ऋ० ८, ६७ १०। (ख) ऋ० ८, ६८, १। (ग) ऋ० ८, ६८, १४। (घ) ऋ० ८, ६९, ११। (ङ) ऋ० ८, ७१, १।

उ[क]दित्याश्विनमाग्नेये परे सूक्ते विशो विश[ख] ॥८५॥
अभ्यामह[ग]मिति द्वाभ्यां स्तौत्यात्मानमृषिः स्वयम् ।
आत्मानमात्मना स्तुत्वा स्तौति दानं श्रुतर्वणः ॥८६॥
आत्मादानाभिसंस्तावात् परुष्णीञ्च महानदीम्[१] ।
परुष्ण्या परया चेन्द्र[२] त्रिभिः सूक्तैरिम[घ]न्न्विति ॥८७॥
सोमस्य स्वय[ङ]मित्यस्य पराण्यैन्द्राणि यानि तु ।
नष्टी[च]ति तेषां प्रथमे[३] वैश्वदेव्यृगवीवृधत्[छ] ॥८८॥
देवाना[ज]मिति देवानामग्नेह[झ]माग्नेयमुत्तरम्[४] ।
पौर्ण्याश्विनानि सूक्तानि आ मे[ञ]ऐन्द्राणि त[ट] तथा[५] ॥८९॥
अपालाऽत्रिसुता श्यावीत्कन्या त्वग्दोषिणी पुरा ।
तामिन्द्रश्चकमे दृष्ट्वा[६] विजने पितुराश्रमे ॥१००॥

---

(१) आत्मानमात्मना स्तुत्वेत्यादि परुष्णीञ्च महानदीमित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः ।
(२) परया परुष्णीमिन्द्रमिति क० ग० घ० च० ।
(३) प्रथममिति घ० पुस्तकान्तरञ्च ।
(४) आग्नेयन्तु ततः परमिति क० घ० च० ।
(५) आम इति ऐन्द्राणि तमितोऽपि चेति क० ग० घ० च० ।
(६) दृष्ट्वेति क० घ० च० ।

---

(क) ऋ० ८, ७३, १ । (ख) ऋ० ८, ७४, १ । (ग) ऋ० ८, ७४, १३ । (घ) ऋ० ८, ७६, १ । (ङ) ऋ० ८, ७९, १ । (च) ऋ० ८, ८०, १ । (छ) ऋ० ८, ८०, १० । (ज) ऋ० ८, ८३, १ । (झ) ऋ० ८, ८४, १ । (ञ) ऋ० ८, ८५, १ । (ट) ऋ० ८, ८८, १ ।

तपसा बुबुधे सा तत् सर्व्वमिन्द्रचिकीर्षितम् ।
उदकुम्भं समादाय अपामर्थं जगाम सा(१) ॥१०१॥
दृष्ट्वा सोममपादास्ये तुष्टावर्चा वने तु त ।
कन्या वा(क)रिति चैतस्यामेषोऽयं कथित सुत(२) ॥१०२॥
सा सुषाव मुखात् सोमं सुत्वेन्द्रश्चाजुहाव त(३) ।
असौ य एषी(ख)त्यनया पपाविन्द्रस्तु तन्मुखात्(४) ॥१०३॥
अपूपाश्चैव सक्तूंश्च भक्षयित्वा तु तद्गृहात्(५) ।
अभिष्टुष्टाव सा चैनं जगादैनं वृचेन तु(६) ॥१०४॥
सुलोमामनवद्याङ्गीं कुरु मां शक्र सुत्वचां ।
तस्यास्तद्वचनं श्रुत्वा प्रीतस्तेन पुरन्दर(७) ॥१०५॥
रथच्छिद्रेण तामिन्द्र शकटस्य युगस्य च ।

---

(१) क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु उदकुम्भं समादायेति श्लोकार्द्धं, अपूपाश्चैव सक्तूंश्चेति श्लोकार्द्धात्परत पठितम् ।
(२) दृष्ट्वा सोममपादास्ये इत्यादि एषोऽयं कथितः सुत इत्यन्तपाठ क॰ ग॰ घ॰ च॰ चिह्नितपुस्तके नोपलभ्यते ।
(३) पपाविन्द्रस्तु तन्मुखादिति क॰ ग॰ घ॰ च॰ ।
(४) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते ।
(५) प्रतमानुरिति ख॰ ङ॰ पुस्तकान्तरश्च ।
(६) असौ भूते वृचेन सेति ङ॰ पुस्तकान्तरश्च ।
(७) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते ।

---

(क) ऋ॰ ८, ९१, १ । (ख) ऋ॰ ८, ९१, २ ।

प्रचिप्य निश्चकर्ष त्वचः सुलक् सा तु ततोऽभवत्[१] ॥१०६॥
तस्यां त्वचि व्यपेतायां पूर्व्वस्यां शल्यको[२]ऽभवत् ।
उत्तरा त्वभवद्गोधा कृकलासस्त्वगुत्तमा ॥१०७॥
इतिहासमिमं[३] सूक्तं त्वाहतुर्यास्कमाठरौ[४] ।
कन्ये[क]ति शौनकः सूक्ते पान्त[ख]मैन्द्रे ततः परे[५] ॥१०८॥
उत्तमा पार्भवी प्रोक्ता उत्तरश्चैतरेयके ।
छान्दोगिके तृतीये तद्दार्भवं पठ्यते यतः[६] ॥१०९॥
मारुतं गौः[ग] परं सूक्तमा त्वे[घ]न्द्राणि[७] पराणि षट् ।
सूक्ते द्वितीय एतेषामितिहासं प्रचक्षते[८] ॥११०॥

---

(१) तत. सा सुलचाभवदिति ख० पुस्तकान्तरञ्च।
(२) तस्यास्त्वग्व्यपेतायाः पूर्व्वा सा शल्यक इति क० ग० घ० च० ।
(३) इदमिति क० ग० घ० च० ।
(४) यास्कमागुरिरिति क० ग० घ० च० यास्कगालवाविति ख० पुस्तकान्तरञ्च ।
(५) शौनकस्त्वैन्द्रं यानामित्युत्तरे च ये इति क० ।
(६) उत्तमा पार्भवीत्यादिश्लोक. क० ग० घ० च० चिह्नितपुस्तकेषु नापश्यत ।
(७) त्वावैन्द्राणीति क० ग० घ० च० ।
(८) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।

---

(क) ऋ० ८, ९१, १ । (ख) ऋ० ८, ९२, १ । (ग) ऋ० ८, ९४, १ । (घ) ऋ० ८, ९५, १ ।

अपक्रम्य तु(१) देवेभ्यः सोमो वृत्रभयार्दितः ।
नदीमंशुमतीनाम्नीमभ्यतिष्ठत् कुरून्(२) प्रति ॥१११॥
तं बृहस्पतिरेकेन अभ्यपा(३)द्वृत्रहा सह ।
योत्स्यमानः सुसंहृष्टै(४)र्मरुद्भिर्विविधायुधैः ॥११२॥
दृष्ट्वा तानायतः सोमः स्वबलेन व्यवस्थितः ।
मन्वानो वृत्रमायान्त(५) जिघांसुमरिसेनया ॥११३॥
व्यवस्थितं धनुष्मन्तमुवाच बृहस्पतिः ।
मरुत्पतिरयं सोम एहि(६) देवान्(७) पुनर्विभो ॥११४॥
श्रुत्वा देवगुरोर्वाक्यमनर्थं वृत्रशङ्कया(८) ।
सोऽब्रवीन्नेति तं शक्र ओजसैव(९) बलाद्बली ॥११५॥

---

(१) अपचक्रामेति ख० ट० पुस्तकान्तरे च ।
(२) अंशुमती नाम्ना व्यवतिष्ठद्गुरूनिति क० ग० घ० च०, अभ्यतिष्ठत् कुरूनिति ख० ड० ।
(३) अभ्ययादिति पाठः साधुः । वृत्राभ्ययादिति ख० पुस्तकान्तरे च ।
(४) योत्स्यमानश्च संहृष्टैरिति क० घ० च० ।
(५) दृष्ट्वा तानायतांस्सोमः स्वबलेन व्यवस्थितम् । मन्वानः पुत्रमायान्तमिति क० घ० च० ।
(६) मरुत्पतिरयं सोममेहीति क० ग० घ० च० ।
(७ देवेति पाठः समीचीनः ।
(८) श्लोकार्द्धमेतत् क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(९) मार्गं स्वेति क० घ० च० ।

द्रयाय देवानायन्तं[1] तं पपुर्विधिवत्सुराः ।
जघ्नुः पीत्वा च दैत्यानां समरे[2] नवतीर्नव ॥११६॥
तदेतदप्यवद्रप्स[3][क]सूक्ते सर्व्वं निगद्यते ।
तृचस्य देवता तस्य[4] इन्द्रमेवाह शौनकः ॥११७॥
ऐन्द्राबार्हस्पत्य उभा ब्राह्मणे त्वैतरेयके[5] ।
तृचेनेन्द्रमपश्यन् तं [6]नेमोऽय[ख]मिति भार्गवः ॥११८॥
तुष्टावेन्द्रो दृष्ट्वैनाय[ग]मस्मि पश्य च मामिह ।
स हि स्तुवत्येव एको नेन्द्रा[7] अस्तीति चाब्रवीत् ॥११९॥
तदाकर्ण्येन्द्र आत्मानमृग्भ्यां तुष्टाव दर्शयन्[8] ।

---

(१) व्यादायेति क० ग० घ० च० ।
(२) इत्वरा इति क० घ० च० ।
(३) तदेतदपि यतस्मिन्निति क० ग० च० ।
(४) देवता प्रोक्ता इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(५) श्लोकार्द्धमेतत् क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(६) यदृश्यन्तमिति क० घ० च०, ऐन्द्रमपश्यन् तमिति ख० पुस्तकान्तरञ्च ।
(७) इन्द्रः इति पाठः साधुः ।
(८) स हि स्तुवन्नेव एक इत्यादि ऋग्भ्यां तुष्टाव दर्शयन्नित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः ।

---

(क) ऋ० ८, ९६, १३ । (ख) ऋ० ८, १००, ३ । (ग) ऋ० ८, १००, ४ ।

ऋषिस्तु दृष्ट्वा[1] सुप्रीतो विश्वेत्तात[क]इति तृचे ॥१२०॥
विविधानि च कर्म्माणि दानमैन्द्रस्य शंसति ।
मनोजवा[ख]स्तु सौपर्णीं[2] समुद्रे[ग] वज्रसंस्तवः ॥१२१॥
वाचं सर्व्वगतां देवीं[घ] स्तौति यद्वा[ङ]गिति तृचे ।
यो लोकानभितप्येमान्[3] वृत्रस्तस्थौ स्वयं श्रिया ॥१२२॥
तं नाशकं हन्तुमिन्द्रो विष्णुमभ्येत्य सोऽब्रवीत् ।
वृत्रं हनिष्ये तिष्ठस्व विक्रम्याद्य[4] ममान्तिके ॥१२३॥
उद्यतस्य तु[5] वज्रस्य द्यौर्द्ददातु[6] समान्तरम् ।
तथेति विष्णुस्तच्चक्रे द्यौश्चास्य विवरन्ददौ ॥१२४॥
तदेतदखिलं प्रोक्तं विष्णविति सखे[च]तृचे[7] ।

---

(१) तं दृष्ट्वेति ख० ङ० पुस्तकान्तरेषु ।
(२) सौपर्णीति ख० ट० ।
(३) यमितप्येमानिति ख० ङ० पुस्तकान्तरेषु ।
(४) वृत्रं हनाम विक्रम्य तिष्ठस्वाद्येति ख० ङ० पुस्तकान्तरेषु ।
(५) उद्यतस्येति क० ग० घ० ।
(६) ददस्विति क० ग० घ० ।
(७) यत्संभृतिन्द्रोऽहं सखीयुचेति क० ग० घ० ङ० ।

---

(क) ऋ० ८, १००, ६ । (ख) ऋ० ८, १००, ८ । (ग) ऋ० ८, १००, ९ । (घ) ऋ० ८, १००, ११ । (ङ) ऋ० ८, १००, १० । (च) ऋ० ८, १००, १२ ।

मैत्रावरुणः सूक्ताद्यायतस्त्स्वृध(क)गित्यृचः ॥२२५॥
प्रे(ख)ति मित्राय वा पादाश्चार्य्यम्णो(१) वरुणस्य च।
नय(ग)श्चतुर्थः सर्वेषामादित्यानामिति स्तुतिः ॥१२६॥
परा त्वादित्यदेवत्या(२) आ म(घ) इत्याश्विनो तृचः(३)।
वायव्ये चोत्तरे सौर्य्ये औषसी त्वृगियं(ङ) परा(४) ॥१२७॥
पावमानी प्रजा हे(च)ति माते(छ)त्यृग्भ्यान्तु गौः स्तुता।
त्वमग्ने वृह(ज)दाग्नेये परेऽग्निस्तृचि संस्तुतः ॥१२८॥
मरुद्भिः सह रुद्रेण आग्ने याही(झ)ति मध्यमः।
प्रजा हे(ञ)त्यपि वाद्वैर्व्वे प्रथमेऽग्निरिहोच्यते ॥१२९॥
पादे तृतीये आदित्य स्तुरीये मध्यमः स्तुतः।

---

(१) मित्राय पादस्य चार्य्यम्णः इति क० ख० ग० घ०।
(२) ऋच आदित्यदेवत्या इति ङ० पुस्तकान्तरञ्च।
(३) तृच इति ग०।
(४) सौर्य्यं चौषसा प्रभा वा चन्द्रसूर्य्ययोरिति ख० ङ० पुस्तकान्तरञ्च। चौषसा इत्यत्र उषसेति ग०।

---

(क) ऋ० ८, १०१, १। (ख) ऋ० ८, १०१, ५। (ग) ऋ० ८, १०१, ४। (घ) ऋ० ८, १०१, ७। (ङ) ऋ० ८, १०१, ११। (च) ऋ० ८, १०१, १४। (छ) ऋ० ८, १०१, १५। (ज) ऋ० ८, १०२, १। (झ) ऋ० ८, १०२, १४। (ञ) ऋ० ८, १०२, १४।

रहस्ये ब्राह्मणेऽप्येवं व्याख्यातं ह्यैतरेयके[1] ॥१२०॥
पावमानः स्तुतः सोमो नवमे लिङ्ग मण्डले[2] ।
पवमानवदाग्नेयस्तु[3] समिद्धः [क]इति संस्तुतः ॥१२१॥
अग्न आयूंषी[ख]ति पादा तिसृष्वग्निर्निपातभाक् ।
अविता न[ग] इति त्वस्मिंस्तृचे पूष्णा[4] सह स्तुतः ॥१२२॥
आग्नेय्यौ द्वे पवमान यत्त [घ]इत्युत्तरे ततः ।
उभाभ्या[ङ]मिति सावित्री अग्निसावित्र्य[5]नुत्तरा ॥१२३॥
पुनन्तु मा[च] वैश्वदेवी आग्नेयी त्वृगुपप्रियम्[छ] ।
षडुत्तरा[6] य[ज] इत्यत्र[7] स्वाध्यायाध्येतृसंस्तवः ॥१२४॥

---

(१) ब्रजा हेत्यमि यार्द्धेन इत्यादिसार्द्धश्लोक क॰ ग॰ घ॰ च॰ चिह्नित-पुस्तकेषु न विद्यते ।

(२) नवमे मण्डलेऽर्षिभिरिति क॰ घ॰ च॰, मण्डलर्षिभिरिति ग॰ ।

(३) पवमानवदाग्नेय इति ख॰ ।

(४) पूषेति ख॰ ङ॰ पुस्तकान्तरच ।

(५) व्याग्न्यासावित्रीति ख॰ ।

(६) षलोत्तरा इति [illegible]॰ ङ॰ पुस्तकान्तरच ।

(७) उत्तरे च य इत्येवेति ग॰ ।

---

(क) ऋ॰ ९, ५, १ । (ख) ऋ॰ ९, ६६, १९ । (ग) ऋ॰ ९,६७,२० ।
(घ) ऋ॰ ९, ६७, २३ । (ङ) ऋ॰ ९, ६७, २४ । (च) ऋ॰ ९, ६७, २७ ।
(छ) ऋ॰ ९, ६७, २८ । (ज) ऋ॰ ९, ६७, ३१ ।

सूक्ते निरुक्ते सूक्ते[क]ऽग्नि रक्षोहा घर्मसंस्तवः[१] ।
सूर्य्यवर्चात्मवर्चा च[२] पवित्र[ख]मिति चोच्यते ॥१२५॥
आर्भवन्तु भवेत्पाद स्वभुर्धीर[ग] इति स्मृतः ।
निपातैस्तु त्रिभिः पादैस्त्रयो देवा इहोदिताः[३] ॥१२६॥
मह्ना देवानां तिस्रोकास्त्रिभिस्त्वेतैर्हृचैस्तु चे.[४] ।
सूर्य्यवर्चात्मवर्चायं[५] स्तूयते सोम[घ] इत्यपि[६] ॥१२७॥
अनावृष्ट्यां तु वर्त्तन्त्यां पप्रच्छर्षीञ्छचीपतिः ।
काले दुर्गे महत्यस्मिन् कर्म्मणा केन जीव्यय ॥१२८॥
शकटं शाकिनी गावः कृषिरस्यन्दनं वनं[७] ।
समुद्रः पर्व्वतो राजा एवं जीवामहे वयम् ॥१२९॥
अथ स्तुवन्[८] शशंसास्य कृपिराङ्गिरसः शिशुः ।

---

(१) एतच्छ्लोकार्द्धं ङ० चिह्नितपुस्तके न पठितम् ।
(२) सूर्य्यवर्चात्मवर्चायीति क० घ० च० ।
(३) एष श्लोक क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(४) हृचाद्दृचैरिति क० ग० घ० च० ।
(५) सूर्य्यवर्चात्मवर्चामीति क० घ० च० ।
(६) एव वेति क० ग० घ० च० ।
(७) अटरस्य मन्दनन्दनमिति ख० । एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नापश्यत ।
(८) स्तुवन्नेवेति क० ग० घ० च० ।

---

(क) ऋ० ९, ७३, १ । (ख) ऋ० ९, ८३, १ । (ग) ऋ० ९, ८०, १ । (घ) ऋ० ९, १०७, ७ ।

नानानीयेन(क) सूक्तेन ह्यृषीणामेव(१) सन्निधौ ॥१४०॥
तानिन्द्रः प्राब्रवीत् सर्व्वां(२)स्तपध्वं सुमहत्तपः ।
नातप्ततपसः शक्यमिदं(३) कृत्स्नं व्यपोहितुं ॥१४१॥
अथ ते वै तपस्तेपुः सर्व्वे स्वर्गजिगीषवः ।
ततस्ते तपसोग्रेण पावमानीर्ऋषोऽब्रुवन् ॥१४२॥
अनसूयुरधीयानः शुश्रूषुस्तपसान्वितः ।
दश पूर्व्वापरान् वंश्यान् पुनात्यात्मानमेव च ॥१४३॥
पापं यच्चा(४)करोत्किञ्चिन्मनोवाग्देहभोजनैः(५) ।
पूतः स तस्मात् सर्व्वस्मात् स्वाध्यायफलमश्नुते(६) ॥१४४॥
पावमान्यः परं ब्रह्म शुक्रं ज्योतिः सनातनं(७) ।
गायत्र्योऽग्नेश्च यद्यासां प्राणानायम्य तन्मनाः(८) ॥१४५॥
पावमानं पितॄन् देवान् ध्यायेद्यश्च सरस्वतीम् ।

---

(१) ह्येवेति ख० ङ० पुस्तकान्तरयोः ।
(२) स्तांश्च सर्व्वांश्चिति क० ग० घ० च० ।
(३) न ह्यतप्ततपसा शक्यं विनेति क० ग० घ० च० ।
(४) यदेति ख० ङ० पुस्तकान्तरयोः ।
(५) मनोवाग्देहतो जनैरिति क० घ० च०, मनोवाग्देहतो जनैरिति ग० ।
(६) अविद्याध्ययनात्पुण्यादिति ख० ङ० पुस्तकान्तरयोः ।
(७) ज्योति[illegible]मिति क० घ० च० ।
(८) अयं श्लोकः ख० ङ० पुस्तकयोर्न विद्यते ।

---

(क) ऋ० ८, ११०, १ ।

पितॄंस्तस्योपवर्तेत(१) क्षीरं सर्पिर्मधूदकम् ॥१४६॥
एतत् सूक्तं शतं सौम्यं मण्डलं सचतुर्दशम्।
पावमान(२)मिति ख्यातमनुवाकास्तु सप्त वै(३) ॥१४७॥
सप्ताग्नेयानि सूक्तानि ददर्शाग्य इति स्थितः।
प्रकेतुने(क)ति त्वाष्ट्रस्तु त्रिशिराः सूक्तमुत्तरम् ॥१४८॥
अपश्यत्स(४) षडाग्नेय्यृभुवस्त्वे(ख)ति(५) यः परः।
तेनेन्द्रमभितुष्टाव स्वभान्त इति नः(६) श्रुतिः ॥१४९॥
अभवत्स हि(७) देवानां पुरोधाः प्रियकाम्यया(८)।
असुराणां स्वसुः पुत्रस्त्रिशिरा विश्वरूपधृक् ॥१५०॥
तमृषिं प्रहित(९)स्त्विन्द्रो देवेषु बुबुधेऽसुरैः।

---

(१) उपतिष्ठेतेति ख० पुस्तकान्तरञ्च।
(२) क्षीणमात्रमिति ख०।
(३) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(४) तस्येति ख०।
(५) त्वचस्यास्येतीति ख०।
(६) न श्रुतिरिति क० ग० च०, श्रुतमिति ख०, पुस्तकान्तरञ्च। एष श्लोकः ग० चिह्नितपुस्तके न पठितः।
(७) स ह्येति ख० ग०।
(८) स्वयकाम्ययेति ख० ग० पुस्तकान्तरञ्च।
(९) तं ऋषयत् प्रहितः इति क० घ० च०। प्रहित इति ग०।

---

(क) ऋ० १०, ८, १। (ख) ऋ० १०, ८, ७।

सोऽस्य वज्रेण तान्याशु(१) शिरांसि त्रीण्यच्छिनत्(२) ॥१५१॥
तस्य यत्सोमपानन्तु मुखं सोऽभूत् कपिञ्जलः ।
कलविङ्कः सुरापानमन्नाद् तित्तिरि(३)रभवत् ॥१५२॥
तं वागभ्यवदद्ब्रह्मो(४) मघवन्नसि शतक्रतो ।
अपक्वं हतवान् यस्माद्(५) विश्वरूपं पराङ्मुखम् ॥१५३॥
तमभ्यषिञ्चत् सूक्तेन ऋषि(क)राप(ख) इति स्वयम् ।
सिन्धुद्वीपोऽपनुत्त्यर्थं तस्याशौचस्य पाप्मनः ॥१५४॥
मैथुनार्थमभीप्सन्तीं प्रत्याचष्टे यमी यमः ।
श्रोषित् मस्राय(ग)(७) सवादो(८) विवस्वत्तु तयोस्तयोः ॥१५५॥
द्युता(घ)ग्नेये हविर्धाने युजे वा(ङ)मर्थ(९) मन्यते ।
परेयिवांस(च)मित्यत्र स्तूयते मध्यमो यमः(१०) ॥१५६॥

---

(१) सोऽस्य वज्रेण तस्याशु इति ख० ग० घ० ।
(२) तान्याशु शिरांसि त्रीण्यपाच्छिनदिति ग०। शिरांस्येताच्छिनत् प्रभु इति ख० पुस्तकान्तरम् ।
(३) तित्तिरः इति ख० ग० पुस्तकान्तरम् ।
(४) नोऽवेति ख० ग० घ० ।
(५) यत्स्वमिति क० ख० घ० ।
(६) सूर्यामिति क० ग० ख० घ० ।
(७) तदोविदिनेति क० ग० ख० घ० ।
(८) सवाद इति क० ख० घ० ।
(९) युञ्जेतनेति क० ग० ख० घ० ।
(१०) इत्येनमिन्द्र मध्यमो सूक्ताद्य इति क० ख० घ० ।

(क) ऋ० १०, ९, १ । (ख) ऋ० १०, १० १ । (ग) ऋ० १०,११, १ ।
(घ) ऋ० १०,१३ १ । (ङ) ऋ० १०, १४, १ ।

अथर्व्वाणोऽथ भृगव पितरोऽङ्गिरस[क]श्च ह ।
षष्ठ्या देवगणास्तत्र सस्तूयन्ते शुभक्रय ॥१५७॥
पितृभिश्चाङ्गिरोभिश्च सस्तुतो दृश्यते यम ।
मन्त्रेषु वरुण पादे विवस्वन्त पिता हि स ॥१५८॥
सत्कार्य्यप्रेतमयुक्तै पितृभि स्तूयते यम ।
प्रेहि प्रेही[ख]ति तिसृषु प्रेताग्निष उदाहृता ॥१५९॥
पितॄणा हि पति र्देवो यमसाम्रात् स सूक्तभाक्[१] ।
अतिद्रव[ग]इत्थे श्वानौ पर पिप्यमुदीरितम्[२] ॥१६०॥
परेणैव[३] तु सूक्तेन श्मशाने कर्म्म शसति[४] ।
पितृदेवासुराणाञ्च अभवस्रययस्तय ॥१६१॥
हव्यकव्यवहौ चोभौ सह रचाग्निना सह[५] ।
तत्र मैन[घ]मिति लेतमृकव्यवाहनमस्तुति[६] ॥१६२॥

---

(१) अथर्व्वाणोऽथ भृगव इत्यादिसार्द्धश्लोकत्रय क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते ।
(२) उदीरितामिति क॰ ग॰ घ॰ च॰ ।
(३) उत्तरेणेति ग॰ ।
(४) एतच्छ्लोकार्द्धं ख॰ ङ॰ चिह्नितपुस्तकयोर्न पठितम् ।
(५) सदरचा च गामय इति ख॰ ङ॰ पुस्तकान्तरच ।
(६) स्तात कयवाहनमेवचेति ख॰ ङ॰ पुस्तकान्तरच ।

---

(क) ऋ॰ १०, १४, ६ । (ख) ऋ॰ १०, १४, ७ । (ग) ऋ॰ १०, १४, १० ।
(घ) ऋ॰ १०, १६, १ ।

# अथ सप्तमोऽध्यायः ।



दृष्ट्वा[1] भर्तुः परोक्षन्तु सरण्यूः सवर्णां स्त्रियम् ।
निक्षिप्य मिथुनं[2] तस्यामश्वा भूत्वापचक्रमे[3] ॥१॥
अविज्ञानाद्विवस्वांस्तु तस्यामजनयन्मनुम् ।
राजर्षिरभवत् सोऽपि[4] विवस्वानिव तेजसा ॥२॥
स विज्ञाय[5] त्वपक्रान्तां सरण्यूमश्वरूपिणीम् ।
त्वाष्ट्रीं प्रति जगामाशु वाजी भूत्वाश्वलक्षणः[6] ॥३॥
सरण्यूश्च[7] विवस्वन्तं विदित्वा[8] हयरूपिणम्[9] ।

---

(१) दृष्ट्वेति क॰ घ॰ च॰ ।
(२) मैथुनमिति पाठः साधु ।
(३) अश्वा भूत्वोपचक्रमे इति क॰ घ॰ च॰ ।
(४) राजर्षिरासीत् स मनुरिति ख॰ ङ॰ पुस्तकान्तरेषु ।
(५) विज्ञाप्येति ग॰ ।
(६) सलक्षणा इति क॰ घ॰ च॰, सलक्षणः इति ग॰ ।
(७) समिति ख॰ ङ॰ पुस्तकान्तरेषु ।
(८) विज्ञायेति ख॰ ङ॰ पुस्तकान्तरेषु ।
(९) हरिरूपिणमिति पुस्तकान्तरम् ।

मैथुनायोपचक्राम(१) तांच तत्रान्वरोह सः ॥४॥
ततस्तयोस्तु वेगेन शुक्रं तदपतद्भुवि।
उपाजिघ्रच्च(२) सा त्वश्वा तच्छुक्रं गर्भकाम्यया ॥५॥
आघ्रातमात्राच्छुक्रात्तु कुमारौ संबभूवतुः।
नासत्यश्चैव दस्रश्च यौ स्तुतावश्विनाविति(३) ॥६॥
इतिहासमिमं यास्कः सरण्यूदेवते ऋचे(४)।
विवस्वतश्च त्वष्टुश्च त्वष्टे(क)ति सह मन्यते ॥७॥
पूषे(ख)ति पादौ पौष्णौ द्वौ आग्नेया(५)वुत्तरौ तु यौ।
ऋक्तृतीयोऽपि वा पौष्णस्तिस्रश्चान्याः परास्तु याः(६) ॥८॥
अपां स्तुतिस्तृचश्चैका(७) ह्यपात्सारस्वतात्परा।
स्तुतः परोक्षः सोमस्तु द्रप्स(ग) इत्युत्तरे तृचे ॥९॥
अब्देवताशीर्वादो(८) वा पयस्वत्यु(घ)त्तरा तु या।

---

(१) मिथुनायोपचक्रामेति ख० ङ० पुस्तकान्तरञ्च।
(२) उपजिघ्रतीति क० घ० च०।
(३) यौ तु तौ वाजिनाविति क० घ० च०।
(४) ऋचाविति क० ख० घ०, तृचे इति ङ० पुस्तकान्तरञ्च।
(५) द्वावाग्नेयाविति ङ० पुस्तकान्तरञ्च।
(६) पौष्णस्तस्यापरस्तृच इति ख० ङ० पुस्तकान्तरञ्च।
(७) अपां स्तुति स्तुतिश्चैकेति ख०, अपां स्तुतिस्तुतश्चैकेति ङ० पुस्तकान्तरञ्च।
(८) अब्देवताशीर्वाद इति ख० ङ०, पुस्तकान्तरञ्च।

---

(क) ऋ० १०, १७, १। (ख) ऋ० १०, १७, ३। (ग) ऋ० १०, १७, ११।
(घ) ऋ० १०, १७, १४।

घतस्तस्ताः स्तुतिर्मृत्यो[क]रन्ते क्षिप्ताश्च[१] कर्मणि ॥१०॥
मृतशिष्टेभ्य आशास्त इमे[ख] ज्योग्जीवनं पुनः।
इमं जीवेभ्य[ग] आशास्ते तेभ्यः परिधिकर्मणि[२] ॥११॥
यथा[घ] धाव्युत्तरा लाङ्गी ततो यान्या इमा[ङ]स्त्विति[३]।
स्त्रीणामाशिषमाशास्ते तथैवाञ्जनकर्मणि[४] ॥१२॥
उदीर्ष्व नारीत्यनया मृत[च]पत्नी तु रोहती[५]।
भ्राता कनीयान् प्रेतस्य निगदात्[६] प्रतिषेधति ॥१३॥
कुर्य्यादेतत् कर्म होता देवरो न भवेद्यदि।
प्रेतानुगमनं न स्यादिति ब्राह्मणशासनात् ॥१४॥
वर्णानामितरेषाञ्च स्त्रीधर्म्मोऽयं भवेन्न वा[७]।
शान्त्यर्थं धनुरादाने प्रेतस्यैव धनु[छ]र्जपेत्[८] ॥१५॥

---

(१) त्विति ङ०।
(२) एष श्लोक क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(३) यथधांव्युत्तरलाङ्गी ततो यान्या इमास्त्विसीति ख० ङ० पुस्तकान्तरञ्च।
(४) तथा परिधिकर्म्मणीति क० ग० घ० च०।
(५) मृतं पत्न्युरोहतीति पाठः साधुः। मृतमन्वारोहतीति क० घ० च०।
(६) निगतेति क० घ० च०, निगत्वेति ग०।
(७) कुर्य्यादेतत् कर्म्म होतेति सार्द्धश्लोक क० ग० घ० च० चिह्नित-पुस्तकेषु नास्त्यत।
(८) शान्त्यर्थं च जपव्यस्ता, धनुरित्युत्तरामृचमिति क० ग० घ० च०।

---

(क) ऋ० १०, १८, २। (ख) ऋ० १०, १८, ३। (ग) ऋ० १०, १८, ४।
(घ) ऋ० १०, १८, ५। (ङ) ऋ० १०, १८, ७। (च) ऋ० १०, १८, ८।
(छ) ऋ० १०, १८, ९।

विक्रोशमानस(क) इत्यग्निमुत्तरा सूर्य्यमर्च्चति(१) ।
एतौ मे(ख)ऽय य(ग) इत्येते स्तुतिर्थैवेन्द्रवच्चयो(२) ॥२७॥
ऋचे ऋचे(घ) धनुर्येन्द्र(३) देवाना(ङ)मिति तु त्रय ।
शीतोष्णवर्षदातार पर्जन्यानिलभास्करा ॥२८॥
अन्त्ये सूर्य्यानिलौ चोभौ स्तूयेते च पदे(४) सह ।
आ ते जीवातु(च)रित्यस्यामिन्द्रो वा सूर्य्य एव वा ॥२९॥
विश्वो ह्य(छ)न्यच(५) सवाद(६) ऋचे मकस्य चैव हि ।
युग्मा एव तु मकस्य अयुग्मा एव तु स्नुषे(७) ॥३०॥
वृषेन्द्रस्यागतान् देवान् दृष्ट्वा मकमनागतम् ।
यज्ञे परोक्षवत् माह श्वशुरो नागतो मम ॥३१॥
यद्यागच्छेद्भक्षयेत् स(ज) धाना सोम पिबेदपि ।
इति तस्या वच श्रुत्वा तत्पश्चाहेत्यवज्ञयक् ॥३२॥
तिष्ठन् वेद्यामुत्तरस्यामुच्चैराह सरोरुवत्(८) ।

---

(१) एवत्विति क० ग० घ० च० ।
(२) एता उभौ स्तोताविति स्तूयेते वचसुत्तरेति क० घ० च० ।
(३) ऐन्द्रीति क० घ० च०, ऐन्द्रीमिति ग० ।
(४) पदे सस्तूयते इति ख० ङ० पुस्तकान्तरञ्च ।
(५) ह्यन्यस्विति क० ग० घ० च० ।
(६) सवादमिति ख० ङ० ।
(७) युग्मा मकस्य विज्ञेया वसुकस्येतरा ऋच इति ख० ङ० पुस्तकान्तरञ्च ।
(८) वृषेन्द्रस्यागतान् देवानित्यादिसार्द्धश्लोकद्वय क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।

---

(क) ऋ० १०,२७,१८ । (ख) ऋ० १०,२७,२० । (ग) ऋ० १०,२७,२१ ।
(घ) ऋ० १०,२७,२२ । (ङ) ऋ० १०,२७,२३ । (च) ऋ० १०,२७,२४ ।
(छ) ऋ० १०, २८, १ । (ज) ऋ० १०, २८, २ ।

तृतीयया चतुर्थ्या च प्रदेवत्रे[क]त्यपां स्तुतिः[१] ॥२३॥
अपां नपा[ख]दित्यनेन नाम्नाग्नि[२]र्मध्यमः स्तुतः ।
प्रति य[ग]द्वैश्वदेवन्तु[३] त्तस्य मे[घ]त्यैन्द्रमुत्तरम्[४] ॥२४॥
वैश्वदेवी प्र मे[ङ]त्येका सं मे[च]त्यैन्द्री[५]तृचः[६] परः ॥
कुरु श्रवण[छ]मर्धन्ति[७] परे द्वे[८] त्रासदस्यवम् ॥२५॥
ऋते शिचाशियौ राज्ञि तं नपातमृषिः परैः ।
उपमश्रवसं पश्च[ज] चतुर्भिः स व्यमोकयत् ॥२६॥
मायेषा[झ] इति सूक्तं यत्तदसमस्तुति[९]रुच्यते ।
अथा[१०]साम् द्वादशी स्तौति नवम्याद्या च[११] सप्तमी ॥२७॥

---

(१) प्रदेवत्रेत्यपां स्तुताविति ख० ग० ङ० पुस्तकान्तरञ्च ।
(२) नामाग्निरिति क० घ० च० ।
(३) स्त्विति क० ग० घ० च० ।
(४) उत्तममिति ख० ङ० पुस्तकान्तरञ्च ।
(५) तस्यास्त्वैन्द्र इति क० घ० च० ।
(६) तृच इति ग० ।
(७) यर्धन्त इति ख० ङ० पुस्तकान्तरञ्च ।
(८) परा यदिति क० घ० च० ।
(९) तस्यस्येति क० घ० च० ।
(१०) तस्येति ख० ङ० ।
(११) चयेति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १०, ३०, १ । (ख) ऋ० १०, ३०, ४ । (ग) ऋ० १०, ३०, १४ ।
(घ) ऋ० १०, ३२, १ । (ङ) ऋ० १०, ३३, १ । (च) ऋ० १०, ३३, २ ।
(छ) ऋ० १०, ३३, ४ । (ज) ऋ० १०, ३३, ६ । (झ) ऋ० १०, ३४, १ ।

त्रयोदश्यां ऋषिः स्तौति कितवश्चानुशासति(१) ।
अक्षा(२)स्तु येषामिन्दन्ति अबुध्र(क) वैश्वदेवते(३) ॥३८॥
सावित्रमेके मन्यन्ते मह अग्ने(ख) स्तव परम् ।
आचार्यौ शौनको यास्को गालवश्चोत्तमामृचम्(४) ॥३९॥
नमः(ग) सौर्यमैन्द्रमस्मिन्(घ) सौर्यं पच्छा तु या स्तुता(५) ।
निपातिनी(६)स्ता सूक्तान्ते वैश्वदेवो(७)ऽत्र तु तृच(८) ॥४०॥
आश्विनानि तु य(ङ)स्तौति ऐन्द्राण्यस्तो वसु(च) प्र च ।
ऐन्द्राणामुत्तमा यास्तु मतोऽर्द्धर्चे(९) बृहस्पति(छ) ॥४१॥
परे दिव पर्य्य(ज)ग्नये प्रथमस्योत्तमा तु या(१०) ।

---

(१) एतच्छ्लोकार्द्धं ख० ङ० चिह्नितपुस्तकयोर्न विद्यते ।
(२) अघ्ना इति ङ० ।
(३) वैश्वदेवतमिति पाठः साधुः ।
(४) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः ।
(५) पच्छो नु संस्तुता इति ख० ङ० पुस्तकान्तरञ्च ।
(६) निपातिन इति ख० ङ० ।
(७) सूक्तान्तो वैश्वदेव इति क० ग० घ० च० ।
(८) तृच इति ग० ।
(९) यास्तु पादर्द्धर्चे इति क० ग० घ० च०, याः सूक्ततोऽर्द्धर्चे इति ङ० ।
(१०) उत्तमेन इति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १०, ३४, १ । (ख) ऋ० १०, ३६, १२ । (ग) ऋ० १०, ३७, १ ।
(घ) ऋ० १०, ३८, १ । (ङ) ऋ० १०, ३९, १ । (च) ऋ० १०, ४२, १ ।
(छ) ऋ० १०, ४२, ११ । १०, ४३, ११ । १०, ४४, ११ । (ज) ऋ० १०,
४५, १ ।

द्यावापृथिव्यौ विश्वे च पश्चा[1]र्द्धर्चेन संस्तुताः ॥४२॥
आसीत् काक्षीवती घोषा पापरोगेण दुर्भगा ।
उवास षष्टिवर्षाणि पितुरेव गृहे पुरा ॥४३॥
आतस्थे महती चिन्ता न पुत्रो न पतिर्मम ।
जरां प्राप्ता वृथा तस्मात् प्रपद्येऽहं शुभस्पती ॥४४॥
यथैतौ मामकस्तात आराध्यावाप यौवनम् ।
आयुरारोग्यमैश्वर्यं सर्व्वंभूतहने विषम्[2] ॥४५॥
रूपवत्ताञ्च सौभाग्यमहं तस्य सुता यदि ।
ममापि मन्त्राः प्रादुःष्युर्यैः स्तोष्येते मयाश्विनौ ॥४६॥
चिन्तयन्तीति सूक्तानि त्रीणि घोषा ददर्श सा ।
स्तुतौ तावश्विनौ देवौ प्रीतौ तस्या भगान्तरम् ॥४७॥
प्रविश्य विजरारोगां सुभगाञ्चक्रतुश्च तौ ।
भर्त्तारं ददतुस्तस्यै सुहस्त्यञ्च सुतं मुनिम्[3] ॥४८॥
ददतुस्तौ सुपर्णाभ्यां यज्ञासत्येति[4] कीर्त्तिते ।
काक्षीवत्यै च घोषायै तथा ददतुरोजसा[5] ॥४९॥

---

(१) पञ्चो इति ख० ग० ङ० ।
(२) सर्व्वंभूतहते विषमिति ङ० ।
(३) मनोरिति ङ० ।
(४) येनासत्येतीति ख० ।
(५) न तस्यां मात्युरोगयेति ख० ङ० पुस्तकान्तरञ्च । आसीत् काक्षीवती घोषेत्यादि सप्त श्लोकाः क० ग० घ० च० चिह्नितपुस्तकेषु न सन्ति ।

प्राजापत्यासुरी त्वासीद्विकुण्ठा नाम नामतः ।
सेच्छन्तीन्द्रसमं पुत्रं तेपेऽथ सुमहत्तपः ॥५०॥
सा प्रजापतितः कामान्[1] लेभेऽथ विविधान् वरान्[2] ।
तस्याश्चेन्द्रः स्वयं[3] जज्ञे जिघांसुर्दैत्यदानवान् ॥५१॥
एकदा[4] दानवैः सार्द्धं समरे समसज्जत ।
जघान तेषां नवतीर्नव सप्त च सप्तधा[5] ॥५२॥
भित्त्वा[6] स्वबाहुवीर्येण हैमरौप्यायसीः[7] पुरीः ।
हत्वा सर्व्वान् यथास्थानं पृथिव्यादिष्ववस्थितान्[8] ॥५३॥
राज्यं प्राप स दैत्येषु स्वेन वीर्य्येण दर्पितः ।
देवान् बाधितुमारेभे मोहितोऽसुरमायया ॥५४॥
बध्यमानास्तु तेनापि असुरेणामितौजसा ।
उपाधावन्नृषिश्रेष्ठं तत्प्रबोधाय सप्तगुम्[9] ॥५५॥

---

(१) काममिति क॰ घ॰ च॰ ।
(२) सुमहत्तपा इति क॰ ग॰ घ॰ च॰ ।
(३) सुत इति ख॰ ङ॰ पुस्तकान्तरयोः ।
(४) एतस्येति क॰ घ॰ च॰ ।
(५) सप्तकानिति ख॰ ङ॰ पुस्तकान्तरयोः ।
(६) जित्वेति ख॰ ङ॰ पुस्तकान्तरयोः ।
(७) हैमरूप्यायसीरिति क॰ घ॰ च॰ ।
(८) एतच्छ्लोकार्द्धं क॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितम् ।
(९) राज्यं प्राप स दैत्येष्वित्यादिश्लोकद्वयं क॰ ग॰ घ॰ च॰ चिह्नित पुस्तकेषु नापश्यत ।

पृथिव्यां कालकेयांश्च पौलोमांश्चैव धन्विनः ।
तांश्च व्युच्छादयामास[1] प्रह्लादतनयानपि[2] ॥५६॥
ऋषिस्तु सप्तगुर्नाम तस्यासीत्सुप्रियः सखा ।
स चैनमभितुष्टाव जगृभ्मे[क]ति करे स्पृशन् ॥५७॥
ततः स[3] बुद्ध्वा चात्मानं सप्तगुस्तुतिहर्षितः ।
आत्मानमेव तुष्टाव अहं[4] भुव[ख]मिति त्रिभिः ॥५८॥
कीर्तयन् स्वानि कर्माणि यानि स्म कृतवान् पुरा ।
यथाकरोत् स[5] वैदेहं व्यंसं सोमपतिं[6] नृपम् ॥५९॥
वसिष्ठशापादभवद्विदेहो[7] नृपतिः पुरा ।
इन्द्रप्रसादादीजे स[8] सत्रैः[9] सारस्वतादिभिः ॥६०॥
प्रभूतां भक्तिमत्ताश्च प्रभूणामपरिक्रियाम्[10] ।

---

(१) व्युच्छादयन् सर्व्वानिति ख० ङ० पुस्तकान्तरञ्च ।
(२) दिवीति क० ग० घ० च० ।
(३) त्विति ख० ङ० पुस्तकान्तरञ्च ।
(४) चाहमिति ख० ङ० पुस्तकान्तरञ्च ।
(५) चेति क० ग० घ० च० ।
(६) व्यसं सोमपतिरिति क० घ० च०, सौमपतिमिति ख० ।
(७) वैदेहं इति ग० ।
(८) चेति क० ग० घ० च० ।
(९) मन्त्रैरिति पुस्तकान्तरम् ।
(१०) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।

---

(क) ऋ० १०, ४७, १ । (ख) ऋ० १०, ४८, १ ।

विष्णुलोकेषु(१) वैरूप्यं प्रभुत्वं भुवनेषु च ॥६१॥
प्र वो मह(क) इति त्वस्यामात्मानं(२) वार्पयत् स्वयम्(३) ।
वैश्वानरे गृहपतौ यविष्ठेऽग्नौ च पावके ॥६२॥
वषट्कारेण सूक्तेषु अग्नौ च(४) सहस स्तुतौ(५) ।
अपचक्राम देवेभ्य सौचीकोऽग्नि(६)रिति श्रुति ॥६३॥
स प्राविशदपक्रम्य ऋतूनपो वनस्पतीन् ।
ततोऽप्सरा प्रादुरासन्नष्टेऽग्नौ हव्यवाहने ॥६४॥
तेऽग्निमेवान्वैच्छन्त देवा हत्वासुरान् युधि ।
तन्तु दूराद्यमश्चैव वरुणश्चान्वपश्यताम् ॥६५॥
उभावेन समादाय देवानेवाभिजग्मतु ।
दृष्ट्वा देवास्तमब्रुवन्नग्ने हव्यानि नो वह ॥६६॥
वरं गृहाण मत्तश्च पितृभागो भजस्व न(७) ।
प्रत्युवाचाथ तानग्निर्विश्वे देवा यदात्थ माम्(८) ॥६७॥
तत्करिष्ये जुषतान्तु होत्र(९) पञ्च जना मम ।

---

(१) ऋषु सर्व्वेष्विति क॰ ग॰ घ॰ ङ॰ ।
(२) चात्मानं इति क॰ ग॰ घ॰ ङ॰ ।
(३) वीर्य्यमव्ययमिति ग॰ ।
(४) स्विति ङ॰ पुस्तकान्तरञ्च ।
(५) माष्टवर्गौ सह स्तुतावित्ति ख॰ ग॰, सहसस्तुते इति ङ॰ ।
(६) अभिचक्राम सोचिको मयादग्निरिति क॰ ग॰ घ॰ ङ॰ ।
(७) चेति क॰ घ॰ ङ॰ ।
(८) वैश्वानराय दासु मेति क॰ घ॰ ङ॰, विश्वे सूत यथाक्रमादिति ग॰ ।
(९) होत्रमिति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।

---

(क) ऋ॰ १०, ५१, १ ।

ग्राम्यमुख्यः[1] प्रणीतश्च पुत्रो गृहपतेश्च यः ॥६८॥
उत्तरो दक्षिणश्चाग्निरेते पञ्च जनाः स्मृताः ।
मनुष्याः पितरो देवा गन्धर्व्वोरगराक्षसाः ॥६९॥
यास्कौपमन्यवा[2]वेतानाहतुः पञ्च वै जनान् ।
निषादपञ्चमान् वर्णान् मन्यते शाकटायन ॥७०॥
ऋत्विजो[3] यजमानश्च शाकपूणिस्तु मन्यते ।
[4]आयुरस्तु च मे दीर्घं हवींषि विविधानि च ॥७१॥
अरिष्टिः पूर्व्वगानाश्च ब्राह्मणमध्वरेऽध्वरे[5] ।
प्रयाजा[क]श्चानुयाजाश्च घृतं सोमे पयः[6] पशुः ॥७२॥

---

(१) ग्रामामुख्यः इति ग० ।

(२) यास्कोपमन्यवाविति क० ख० घ० ।

(३) ऋत्विजेति ख० ।

(४) ख०चिह्नितपुस्तके आयुरस्तु च मे दीर्घमिति श्लोकात् प्राक्,—

होताध्वर्युश्च उद्गाता ब्रह्मयो तान् वदति तान् ।
चक्षुः श्रोत्रं मनो वाक् च प्राणश्चेत्यात्मवादिनः ।
गन्धर्व्वाप्सरसो देवा मनुष्याः पितरस्तथा ।
सर्पाश्च ब्राह्मणाश्चैव श्रूयन्ते ह्यैतरेयके ॥
ये चान्ये पृथिवीजाता देवाश्चान्येऽथ यज्ञियो ।

इत्यधिकं पठितम् ।

(५) ब्राह्मणमेवमध्वरे इति ख० ।

(६) च यः इति ख० ग० ।

---

(क) ऋ० १०, ५१, ८ ।

मद्दैवत्यानि[1] वै सन्तु यज्ञो मद्देवतोऽस्तु च[2]।
तवाग्ने यज्ञ [क]इत्येतत् मत्यर्द्धं[3] खिष्टकृच्च मः[4] ॥७३॥
तस्य[5] त्रीणि सहस्राणि नव त्रीणि [ख]शतानि च ।
त्रिंशच्चैव तु देवानां हव्यानीव[6] वरान् ददुः ॥७४॥
ततोऽग्निः सुमनाः प्रीतो विश्वैर्देवैः पुरस्कृतः ।
विधुयाङ्गानि यज्ञेषु चक्रे होत्र[7]मतन्द्रितः ॥७५॥
भ्रातृभिः सहितः प्रीतो दिव्यात्मा हव्यवाहनः ।
तस्यास्थि देवदार्व्वासीत्मेदोमांसञ्च गुग्गुलुः ॥७६॥
सुगन्धि तेजन स्नायुः[8] शुक्रं रजतकाञ्चने ।
रोमाणि काशाः[9] केशाश्च कुशाः कूर्म्मा नखानि च ॥७७॥
अन्त्राणि शैवलास्त्वेव मज्जा सिकतकर्करा:[10] ।

(१) मे दैवत्यानीति ख०, मद्दैवत्यान्विति ग०, मद्दैवत्यानीति क० घ० च०।
(२) न्तश्च इति ग० ।
(३) मत्यार्द्धमिति ग० ।
(४) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(५) यस्येति क० ग० घ० ङ० च० ।
(६) सर्व्वाण्येतानिति ग० ।
(७) होत्रमिति ग० ।
(८) सुचिति क० घ० च०, सुगन्धं तजनत् प्राप्नुरिति ख० ।
(९) कोशाविति क० घ० च० ।
(१०) शिकतश्कर्करा इति ख०, विकतशार्करा इति ग० ।

(क) ऋ० १०, ५१, ८ । (ख) ऋ० १०, ५२, ६ ।

व्युदस्य बन्धुप्रभृतीन् द्वैपादा ये विमण्डले ।
द्वौ किराताकुली[1] नाम ततो मायाविनौ द्विजौ ॥८३॥
असमातिः पुरोऽधत्त वरिष्ठौ तौ हि मन्यते ।
तौ कपोतौ द्विजौ भूत्वा गत्वा गोपायनान[2]भि ॥८४॥
मायाबलाच्च योगाच्च सुबन्धुमभिपेततुः ।
स दुःखादभिघाताच्च मुमोह च पपात च ॥८५॥
तौ ततोऽस्यासुमानुच्य[3] राजानमभिजग्मतुः ।
ततः सुबन्धौ पतिते गतासौ भ्रातरस्त्रयः ॥८६॥
जेपुः स्वस्त्ययनं सर्वे मे[क]ति गोपायना[4] सह ।
मन[ख]श्चावर्तयन्तोऽस्य[5] सूक्तं य[ग]दिति तेऽभ्ययुः ॥८७॥
जेपुश्च भेषजार्थं च प्रतारी[घ]ति परस्ततः ।
सूक्तञ्चाद्यमृचस्तत्र[6] निर्ऋतेरपनोदनम् ॥८८॥

---

(१) किरातो कुणी इति ग० । कली इति क० घ० ङ० च० ।
(२) गोपायनानिति घ० ।
(३) चानुप्येति ख० चाचोप्येति ग० ङ० ।
(४) गोपायना इति ख० ग० ।
(५) चावर्त्तन्तस्येति ख० ।
(६) तत्रेति ख० ग० ।

---

(क) ऋ० १०, ५७, १ । (ख) ऋ० १०, ५७, ३ । (ग) ऋ० १०, ५८, १ ।
(घ) ऋ० १०, ५९, १ ।

त्रयः पादा मो ष्वि(क)ति तु सौम्या नैर्ऋत उत्तमः ।
ऋक् सौम्या नैर्ऋती(१) चैषा असुनीते(ख)स्तुतिः परा ॥८९॥
द्वृचे(२) त्वानुमतं पादमन्यं यास्कस्तु मन्यते ।
भूम्याः सोमस्य पूषा च खं पथ्या स्वस्तिरेव च ॥९०॥
स्तुवन्त्योरेव प्राणार्थं पुनर्न(ग) इति तु स्तुता(३) ।
द्वृचः स(घ)मिति रोदस्योरैन्द्रोऽर्द्धर्चः स(ङ)मित्यृचि ॥९१॥
रथस्य नाभ्यमर्थं वै तुष्टुवुस्तत्र रोदसी ।
रथ (च)इत्यभिधानन्तु गदितं पापकृच्छ्रयोः ॥९२॥
आग्निरे(छ)ति चतसृभिस्तत ऐक्ष्वाकुमस्तुवन् ।
इन्द्रक्षत्रे(ज)त्यृचा चास्य स्तुत्वाऽर्गमिपुरारिपः(४) ॥९३॥
अगस्त्यस्ये(झ)ति माता च तेषां तुष्टाव तं नृपम् ।
मृतः स राजा सम्भूतस्तस्मै गौपायनानभि ॥९४॥

---

(१) निर्ऋतीति ख० ग० ।
(२) ऋचीति ग० ।
(३) संस्तुतः इति ख० ।
(४) एतच्छ्लोकार्द्धं [illegible]० लिखितपुस्तके नेक्ष्यते ।

---

(क) ऋ० १०, ५९, ४ । (ख) ऋ० १०, ५९, ५ । (ग) ऋ० १०, ५९, ७ ।
(घ) ऋ० १०, ५९, ८ । (ङ) ऋ० १०, ५९, १० । (च) ऋ० १०, ५९, १० । (छ) ऋ० १०, ६०, १ । (ज) ऋ० १०, ६० ५ ।
(झ) ऋ० १०, ६०, ६ ।

सूक्तेनाथ स्तुव(१)न्नग्निं द्वैपदेन यथाचिषु(२) ।
अग्निरित्यब्रवीदेता(३)नयमन्त परेत्वमून्(४) ॥८५॥
सुबन्धुरस्य चैक्ष्वाकौ(५)मया गुप्तौ हितार्थिना ।
सुबन्धवे प्रदायासून् (६)जीवेत्युक्त्वा च पावक ॥८६॥
स्तुतो गौपायनैः प्रीतो जगाम त्रिदिवं प्रति ।
अथ मा ते(क)ति दृष्टास्ते(७) सुबन्धोरसुमाह्वयन् ॥८७॥
शरीरमभिनिर्दिश्य सुबन्धोः पतितं भुवि ।
सूक्तशेष जगुश्चास्य चेतसो धारणाय ते ॥८८॥
सम्भास्वाय(ख) मित्यस्या पृथक्पाणिभिरस्पृशन् ।
पडिद्(ग) वैश्वदेवानि द्वितीयेऽङ्गिरसां स्तुति(८) ॥८९॥
जन्म कर्म च मध्यस्य(९) इन्द्रेण सह कीर्त्तयन् ।

---

(१) सूक्तेनैषां स्तुवन्निति क० ग० घ० च० ।
(२) द्वैपद यत्तदर्चिष्विति क० घ० च० ।
(३) देवानिति ग० ।
(४) परा त्वसूरिति क० ग० घ० ङ० च० ।
(५) सुबन्धोरस्य चैक्ष्वाकोरिति क० ख० घ० च० ।
(६) असूमिति ख० ग० ।
(७) दृष्टेयेति ख० ।
(८) ऋषिरिति क० घ० च० ।
(९) सख्यास्येति क० घ० च० ।

---

(क) ऋ० १०, ६०, ७ । (ख) ऋ० १०, ६०, १२ । (ग) ऋ० १, ६१, १ ।

आचार्य्या केचिदित्याहुरत्र वाग्विदुषा स्तुत ।
ययाभिर्निन्द्यते[१] लृभि सूक्तेऽन्याभिरनर्थवित् ॥१०७॥
ये रैनामन्वविन्दन्त विद्वांस स्थपिता शचीम्[२] ।
तया च स्वभजद्यज्ञे तदृचोक्त[३] तृतीयया ॥१०८॥
प्रशस्यते दशम्या[४] तु विद्वानुत्तमया तृचा[५] ।
षष्ठे महर्लिंआमाह विनियोगश्च कर्मणाम् ॥१०९॥
परे तु स्तूयते चोक्ता अष्टौ[६] चैवादिते[क] सुता ।
धातेन्द्रो वरुणो मित्र अंश सूर्य्योऽर्य्यमा भग ॥११०॥
ऐन्द्रेऽग्निष्ठा[७] सूक्ते द्वे प्रस्थि[ख]त्यच परन्तु यत् ।
तत्र प्राच्य प्रतीच्यश्च अवच्यो दक्षिणाश्च या[८] ॥१११॥
ता सप्त सप्तकैर्वर्गै मन्यूयन्ते प्रधानत[९] ।

(१) तयाभि निन्दत इति ख० ।
(२) विद्वांसधिमता स्तोमिति ख०, विद्वांसर्पिंमता स्तोमिति ग० ।
(३) उक्त इति क० ग० घ० ।
(४) दशम्येति ग० ।
(५) तृचेति ख० ग० ।
(६) चाष्ट प्राज्ञौ चादितये इति क० ग० घ० ।
(७) अग्निष्टा इति क० ग० घ० ।
(८) दक्षिणान्ववेति ख०, दक्षिणास्तया इति ग० ।
(९) सप्तकैरपि सप्त न्ता इतिष्ठद इति ग०

(क) ऋ० १० ७२, ८ । (ख) ऋ० १०, ७५, १ ।

सत्यसूर्य्यर्त्तुसोमानां सौर्य्याश्च द्व्यृगुच्यते ।
पराभिस्तिसृभिस्तृग्भि(१)स्तूयते सोम चौषधः(२) ॥११८॥
विसृष्टमुत्तरा त्वाषास्तृक् चन्द्रमसमर्च्चति ।
सूर्य्यायै भावसृत्तन्तु रैभी(क)त्यष्टाभिरुच्यते ॥११९॥
य(ख)दश्विनौ हुव(३)स्तौति सूर्य्यं(४) एवोत्तरार्द्धति ।
सतद्भौ वैश्वदेवौ सूर्य्याचन्द्रमसौ परा ॥१२०॥
परस्याः प्रथमौ पादौ सौर्य्यौ चान्द्रमसौ परौ ।
सौर्य्यमाभो हुवे त्वस्मिन्नश्विनौ मन्यते स्तुतौ ॥१२१॥
सूर्य्याचन्द्रमसौ तौ हि प्राणापानौ च तौ स्मृतौ ।
अहोरात्रे(५) च तावेव स्यातां तावेव रोदसी ॥१२२॥
अन्नुवाते हि तौ लोकाञ्ज्योतिषा च रसेन च ।
पृथक् पृथक्के चरतु(६) दक्षिणेनोत्तरेण च ॥१२३॥

---

(१) स्तवेति ख० ।
(२) चौषधिरिति ग० ।
(३) धुव इति ग० ।
(४) सूर्य्यमिति पाठः साधुः ।
(५) अहोरात्राविति ख० ।
(६) तौ चरतः इति पाठः समृतः । चेरतुरिति ग० ।

---

(क) ऋ० १०, ८५, ६ । (ख) ऋ० १०, ८५, १४ ।

[1]सुकिंशुक[क]मिति त्वष्टा सूर्य्यामारोहन्तीं पतिम्।
स्तौति विश्वावसुश्चैव ह्वचे[2] गन्धर्व्वमुत्तरे ॥१२४॥
अनुवरा[ख] इत्यनया यौ तौ[3] स्तौतीह दम्पती।
दृष्टान् प्रपद्यमानान्नु पराभिः पञ्चभिर्वधूम् ॥१२५॥
वाससश्च वधूनाश्च वरदानं प्रपद्यते।
ततस्त्रिभिर्विरागस्य यद्दष्ट[ग][4] इति वाससः ॥१२६॥
तद्युक्तया तया स्पर्शौ निद्रिते पत्युरेव च।
ऋगुत्तरा तृतीयस्य विभवे सति वाससः ॥१२७॥
अन्यत्र मैथुनाद्भर्तुर्हरणं प्रतिषिध्यते।

(१) ख॰ चिह्नितपुस्तके सुकिंशुकमिति श्लोकात् प्राक्,—
सूर्य्यः सरति भूतेषु सवीरः पवितानि वा।
सुहृयत्वापात्येषु सर्व्वकार्य्याणि च वदत्॥
चात् भवति वाचा च श्रावनिन्दतुमुच्यते।
वनेषत्रे समेतानि निर्मितेऽथ चन्द्रमोः॥
इत्यधिकपाठोऽस्ति।

(२) ह्यूचे इति ग॰।

(३) यात्वै इति ख॰।

(४) यद्दष्टइति वाससः इत्यादि ऋगुत्तरा तृतीयस्येत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते।

(क) ऋ॰ १०, ८५, २०। (ख) ऋ॰ १०, ८५, २१। (ग) ऋ॰ १०, ८५, ३०।

ये[क] यक्ष्मनाशिनीं स्तौति इचे[१]मा परिपन्थिनः ॥१२८॥
अद्दते य[ख]दिति लाच यादृम्वाधूयमर्हति।
आशास्ते[२] चैव विविधं शान्तिभ्यथानुशासनम्[३] ॥१२९॥
वद्धा स्त्री भावदत्ति[४]श्च परया तत्र कथ्यते।
पराभिराशीशाशास्ते पृथक् ताभ्यः सहैव च। ॥१३०॥
नम्या वैवाहिका श्लोते निगद्यन्ते नृणामपि।
आर्त्तिज्या यजमानाश्च यथारूप विशेषतः ॥१३१॥
प्रत्यृच प्रतिकीर्त्यन्ते देवताश्चेह यासु या.[५]।

(१) इचे इति ग०।
(२) आशास्तीति क० ग० घ० च०।
(३) शान्तिमिथ्यानुशासनमिति ख०।
(४) भावक्तिमितिति क० घ० च०।
(५) ख० चिह्नितपुस्तके, पराभिराशीराशास्ते इत्यादि देवताश्चेह यासु या इत्यन्तपाठो न विद्यते। तत्र चस्मिन् स्थले,

प्रभुत्यामि(ग)तरिवाथोहस्तग्रन्य धनमाशिष।
आशास्ते परयाकस्त्रा सयोगाथोक्तयाशिष ॥
पराभिराशिष शास्ते पृथक् ताभ्य सह कचित्।
अघोरे(घ)ति हचे तस्या स(ङ)मिहेति इयोर्द्वयो ॥
आगा प्रजापते प्रैमानश्च(च) यथारूप विशेषतः।
प्रत्यृच कीर्त्यते देवता तेषु भावदत्तत ॥

इति पाठो वर्त्तत।

(क) ऋ० १०, ८५,३१। (ख) ऋ० १०,८५,१५। (ग) ऋ० १०, ८५,३६।
(घ) ऋ० १०, ८५,४४। (ङ) ऋ० १०,८५,४६। (च) ऋ० १०, ८५, ४७।

वदेत्तां(१) देवतां तासु मरायंसौवीर्वदेत वा ॥१२२॥
उषसः सर्व्वया चैता भाववृत्तं प्रचक्षते।
सूर्य्यया सह सूक्तेऽस्मिन् पादश्चैवात्र लक्ष्यते ॥१२३॥
वि हि(क) वार्षाकपं सूक्तमथो तु(२) कपिलो वृषा।
इन्द्रः प्रजापतिश्चैव विश्वस्मादिन्द्र उत्तरः(ख) ॥१२४॥
रक्षोहणा(ग)द्दि चाग्नेयं(३) त्रीन् स्तौत्यग्नीन् परं हविः(घ)।
इमञ्च मध्यमञ्चैव अथो वैश्वानरश्च यः ॥१२५॥
इन्द्रं(ङ) पुरुषसूक्त(च)स्तु(४) अन्यया पुरुषस्य तु।
यथैनमभजन् साध्या(५) यज्ञार्थं सोऽयं(६) उच्यते ॥१२६॥
आपान्तमन्यु(छ)रित्यस्यां(७) स्तुतः सोमस्तु(८) दृश्यते।

---

(१) वदेतामिति ख० ग०।
(२) हौति ग०।
(३) वामीयमिति क० ग० घ०।
(४) यथैन्द्रात्पौरुषं सूक्तमिति ख०।
(५) साध्येति ख०।
(६) सार्थं इति ख०।
(७) इन्येतामिति ख०।
(८) चन्द्रेति ख० ग०।

---

(क) ऋ० १०, ८६, १। (ख) ऋ० १०, ८६, ५। (ग) ऋ० १०, ८७, १।
(घ) ऋ० १०, ८८, १। (ङ) ऋ० १०, ८९, १०। (च) ऋ० १०, ९०, १।
(छ) ऋ० १०, ८९, ५।

यात्वोक्यात्साहचर्याद्वा स्तूयते सोम एव वा ॥१२७॥
निपातभाक् सोमस्य श्रद्धा रथीतरोऽब्रवीत् ।
ऐन्द्रो ह्येव निपातस्तु[1] स्तुतोऽग्निरुरूपेण[2]च ॥१२८॥
यज्ञस्य वो[क] वैश्वदेवे प्रैत[ख] इत्युत्तरस्तु यत् ।
तथार्बुदस्तु ग्रावाणः सूक्तेऽस्मिन्नभिवार्चति ॥१२९॥
पुरूरवसि राजर्षावप्सरास्तूर्वशी पुरा ।
न्यवसत् सविदस्तुला तस्मिन् धर्मश्चचार च ॥१४०॥
तया तस्य च संवासं[3]मसूयन् पाकशासन ।
पैतामहस्यानुरागमिन्द्रवस्यापि[4] तस्य तु ॥१४१॥
स तयोस्तु वियोगार्थं[5] पार्श्वस्थं वज्रमब्रवीत् ।
प्रीतिभिन्धनयो[6]र्वज्र मम चेदिच्छसि प्रियम् ॥१४२॥
तथेत्युक्त्वा तयो प्रीतिं वज्रो भिदति[7] मायया ।
ततस्तया विहीनस्तु चचारोन्मत्तवन्नृप ॥१४३॥

---

(१) ऐन्द्रेषु हि निपातोऽत्रेति क॰ ग॰ घ॰ च॰ ।
(२) वरुणेन च इति ख॰ ।
(३) संवासमिति क॰ घ॰ च॰ ।
(४) चानुरागमिन्द्रवर्चापीति क॰ ख॰ घ॰ च॰ ।
(५) विभागार्थमिति क॰ घ॰ च॰ ।
(६) प्रीतिभिद तयोरिति ग॰ ।
(७) भिनत्तीति साधु ।

---

(क) ऋ॰ १०, ९२, १ । (ख) ऋ॰ १०, ९४, १ ।

चरन् सरसि सोऽपश्यदभिरूपामिवोर्वशीम् ।
सखीभिरभिरूपाभिः पञ्चभिः पार्श्वतो वृताम्[१] ॥१४४॥
तामाह पुनरेहीति नेति सा त्वब्रवीन्नृपम् ।
तामुपाह्वयत प्रीत्या दुःखात्सा त्वब्रवीन्नृपम् ॥१४५॥
अप्राप्याहं त्वयेह स्वर्गे प्राप्स्यसि मां पुनः ।
आख्यानं प्रति चाख्यान[२]मितरेतरयोरिदम् ॥१४६॥
संवादं मन्यते यास्क इतिहासन्तु शौनकः ।
यद्[क] इति परमेष्ठं मते[ख]या [ग]ओषधीस्तवः ॥१४७॥
आर्ष्टिषेणस्तु देवापिः कौरव्यश्चैव शन्तनुः[३] ।
भ्रातरौ[४] कुरुषु त्वेतौ राजपुत्रौ बभूवतुः ॥१४८॥
ज्येष्ठस्तयोस्तु देवापिः कनीयांश्चैव शन्तनुः ।
त्वग्दोषी राजपुत्रस्तु[५] ऋष्टिषेणसुतो[६]ऽभवत् ॥१४९॥

---

(१) वृता भतृभिः खतः इति ख० ।
(२) आख्यातमिति क० ग० घ० ङ० ।
(३) कनीयांश्चैव शन्तनुरिति ख० ।
(४) भारताविति क० ग० घ० ङ० ।
(५) त्वग्दोषियौ राजपुत्रः इति क० घ० ङ० ।
(६) आर्ष्टिषेणसुतः इति ग० ।

---

(क) ऋ० १०, ८५, १ । (ख) ऋ० १०, ८६, १ । (ग) ऋ० १०, ८७, १ ।

राज्येन च्छन्दयामासुः[१] प्रजाः स्वर्गं गते गुरौ।
स मुहूर्त्तमिव ध्यात्वा प्रजास्ताः प्रत्यभाषत ॥ १५० ॥

इति बृहद्देवतायां सप्तमोऽध्यायः।

---

(१) छन्दयेयुस्तत्तु राज्यमिति च॰ छ॰ प॰।

# अथाष्टमोऽध्यायः।



न राज्यमहमर्हामि नृपतिर्वोऽस्तु शन्तनुः।
तथेत्युक्त्वाभ्यषिञ्चंस्ताः प्रजा राज्याय शन्तनुम्॥१॥
ततोऽभिषिक्ते कौरव्ये वनन्देवापिराविशत्।
न ववर्षाथ पर्जन्यस्तस्मिन्राष्ट्रे शतं समाः॥२॥
ततोऽभ्यगच्छद्देवापिं प्रजाभिः सह शन्तनुः।
प्रसादयामास चैनं तस्मिन् धर्मव्यतिक्रमे॥३॥
सिसिक्ष(१) चैनं राज्येन(२) प्रजाभिः सहितस्तदा।
तमुवाचाथ देवापिः प्रह्वं प्राञ्जलिसंस्थितम्(३)॥४॥
न राज्यमहमर्हामि त्वग्दोषोपहतेन्द्रियः।
याजयिष्यामि ते राजन् वृष्टिकामेष्ट्या स्वयम्॥५॥
ततस्तन्तु पुरोऽधत्त आर्त्विज्याय स शन्तनुः।
स चास्य चक्रे कर्माणि(४) वार्षिकाणि यथाविधि॥६॥

---

(१) सिषेचेति पाठः समीचीनः।
(२) राज्ये त्विति पाठः साधीयान्। चैव राज्यश्चेति क० ख० घ०।
(३) प्रह्वस्तु प्राञ्जलिः स्थितः इति क० ख० घ०, प्रह्वन्तु प्राञ्जलिसंस्थितमिति ग०, प्रवयं प्राञ्जलिसंस्थितमिति पुस्तकान्तरम्।
(४) चकार सोऽस्य कर्माणीति ख०।

बृहस्पते प्रती[क]त्यृग्भिरीळे चैव[१] बृहस्पतिम् ।
द्वितीययास्य सूक्तस्य बोधितो जातवेदसा ॥७॥
अस्मे ते सुमति[२] वाचं दधामि स्तुहि देवताः[३] ।
इति[४] सोऽस्मै ददौ प्रीतो वाचं देवी[५] तया च सः ॥८॥
ऋग्भिस्तिसृभिर्देवान् जगौ हव्यार्थमेव तु ।
अग्निश्च सूक्तशेषेण क[ख]मैन्द्रं सूक्तमुत्तरम् ॥९॥
इन्द्रदृह्ये[ग]ति विश्वेभ्यस्तु[घ]दित्यृग्भिःस्तुतिः परम् ।
भक्तिप्रकाशने तेषां[६] विनियोगोऽत्र कीर्त्यते ॥१०॥
प्रे[ङ]तीतिहाससूक्तन्तु[७] मन्यते शाकटायनः ।

---

(१) प्रतीत्येतदीळे चैवेति क॰ ग॰ घ॰ ।
(२) अस्येति द्विमतिरिति ख॰ ।
(३) द्वितीययास्य सूक्तस्येत्यादि दधामि स्तुहि देवता इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नापलभ्यते ।
(४) तत इति क॰ ग॰ घ॰ च॰ ।
(५) वाचन्देवीमिति क॰ ग॰ घ॰ च॰ ।
(६) भक्तिप्रकाशने तेषामिति क॰ ख॰ ग॰ घ॰ च॰ ।
(७) इतिहासं प्रेति सूक्तमिति ख॰, सेतिहासं प्रेति सूक्तमिति पुस्तकान्तरम् ।

---

(क) ऋ॰ १०, ९८, १ । (ख) ऋ॰ १०, ९९, १ । (ग) ऋ॰ १०, १००, १ । (घ) ऋ॰ १०, १०१, १ । (ङ) ऋ॰ १०, १०२, १ ।

याम्यैन्द्रौ घन(१)मैन्द्रं वा वैश्वदेवन्तु शौनकः ॥११॥
आजावनेन(२) मार्म्याश्च(३) इन्द्रासोमौ तु सुक्तयः ।
अजयद्वृषभ(४) युक्ता ऐन्द्रश्च द्रुघण रथे ॥१२॥
युध्यन् सख्ये जय प्रेपुरैन्द्रो(५) प्रतिरथ जगौ(६) ।
आशु(क)रैन्द्रमघादेवी अमीषा(ख)मित्यृचि स्तुता ॥१३॥
चतुर्थी वार्हस्पत्या स्यादावस(ग) प्रसहामिति(७) ।
हुवे च(८) मरुतः प्रे(घ)ति मर्व्वेति परसन्तु यत् ॥१४॥
तथाग्निरुकश्छकादारुणैका सूर्य्यमर्चति ।
धर्मपरा(९)सतस्वन्तु सवितारमभी(ङ)ति या ॥१५॥
सूक्तमेषस्य पङ्क्तयः सूर्य्याचन्द्रमसौ सह ।

---

(१) घर्मामिति ख॰, घनमिति ग॰ घ॰ ।
(२) आजावने त्विति ख॰, आजीवनन्त्विति पुस्तकान्तरम् ।
(३) मार्म्याश्च इति ख॰ गार्ग्यश्चेति पुस्तकान्तरम् ।
(४) वृषभमिति क॰ ख॰ घ॰ ।
(५) इन्द्रः इति पाठ सङ्गत ।
(६) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेक्ष्यते ।
(७) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते ।
(८) हुवच्चेति ख॰, हुवे चेति ग॰ ।
(९) धर्मपरा इति ख॰ ग॰ ।

---

(क) ऋ॰ १०, १०३, १ । (ख) ऋ॰ १०, १०३, १२ । (ग) ऋ॰ १०, १०३, ५ ।
(घ) ऋ॰ १०, १०३, १३ । (ङ) ऋ॰ १०, १०६, ७ ।

तुष्टावेन्द्रमसावी(क)ति अष्टकोऽस्मात् परेण(१) तु ॥१६॥
कौत्सः कदा वसो (ख)सूक्तं दुर्मित्रो नाम नामतः।
सुमित्र इति नामास्य(२) गुणार्थमितरं पदम् ॥१७॥
भर्तारंस्तु प्रजाकामः कर्माणि कृतवान् पुरा।
न हि लेभे प्रजाः काश्चित्काश्यपो मुनिसत्तमः ॥१८॥
उवाच भार्य्यां भर्तारं सुतानिच्छामि यावतः।
तावतो जनयिष्यामि देवता द्वन्द्वमस्तु हि ॥१९॥
तमभ्यस्तुत् सर्व्वाणि द्वन्द्वानि स्तुतिकाम्यया।
तान्यवेक्ष्याथ तत्सूक्ते(३) नासत्यौ सूक्तभागिनौ ॥२०॥
तदेतद्द्वन्द्वतो भावादाश्विनं सूक्तमुच्यते।
न ह्यस्मिन्देवतालिङ्गं प्रायेणात्र हि दृश्यते ॥२१॥
सूक्तेन तु परेणाथ स्वयमाविर(ग)भूदिति।
आत्मानमेव तुष्टाव प्राजापत्याथ(४) दक्षिणा(घ) ॥२२॥
दातॄंश्च स्तुतानेके दक्षिणायां वदन्ति तु।
दातृत्वाद्दक्षिणामाहु भोजास्ततृभिः स्तुताः ॥२३॥

---

(१) अष्टकः परमेणेति क० ग० घ०।
(२) सुमित्रश्चैव नाम स्यादिति क० ग० घ०।
(३) सत्सूक्ते इति ख०।
(४) अथेति ख०।

---

(क) ऋ० १०, २०४, १। (ख) ऋ० १०,१०५, १। (ग) ऋ०१०,१०७,१।
(घ) ऋ० १०, १०७, ५।

असुराः पणयो नाम रसापारनिवासिनः[१] ।
गास्तेऽपजह्रुरिन्द्रस्य न्यगूहंश्च[२] प्रयत्नतः ॥२४॥
बृहस्पतिस्तथापश्यद्दृष्ट्वेन्द्राय शशंस च ।
प्राहिणोत्तत्र दूतीन्तु[३] सरमां पाकशासनः ॥२५॥
कि[क]मित्यथायुजाभिस्तां पप्रच्छुः पणयोऽसुराः ।
कुतः कस्यासि कल्याणि किं वा कार्यमिहास्ति ते ॥२६॥
अथाब्रवीत्तां सरमा दूत्यैन्द्री विचराम्यहम् ।
युष्मान् व्रजाद्यान्विष्यन्तो[४] ऐन्द्रीर्गायैव पृच्छति ॥२७॥
विदित्वेन्द्रस्य दूतीन्तामसुराः पापचेतसः ।
ऊचुर्मां सरमे गास्त्वमिहास्माकं स्वसा भव ॥२८॥
सूक्तस्य चान्यथा चर्चा[५] युष्माभिस्त्वेव सर्वशः ।
नाब्रवीन्नाह[ख]मिच्छामि स्वसृत्वं वा धनानि वा ॥२९॥
पिबेयं[६] तु पयस्तासां गवां यास्ता निगूहथ ।
असुरास्तां तथेत्युक्त्वा तदाजह्रुः पयस्ततः ॥३०॥

---

(१) सिन्धुपारनिवासिनः इति ख॰ ।
(२) निगूहस्वेति क॰ घ॰ च॰ ।
(३) दूत्येऽप्येति ख॰ ग॰ ।
(४) विधूय वः सर्व्वा इति क॰ घ॰ च॰ ।
(५) सूक्तस्यान्तपर्य्येति क॰ घ॰ च॰ ।
(६) पिबामीति क॰ घ॰ च॰ ।

---

(क) ऋ॰ १०, १०८, १ । (ख) ऋ॰ १०, १०८, १० ।

सा स्वभावाच्च लौल्याच्च पीत्वा तत्[१] पय आसुरम् ।
परं[२] सवनं चैव बलपुष्टिकरं ततः ॥२१॥
शतयोजनविस्तारामतरत्तां रसां पुनः ।
यस्याः पारेऽपरे तेषां पुरमासीच्च दुर्ज्जयम् ॥२२॥
पप्रच्छेन्द्रश्च सरमां कच्चिद्गा दृष्टवत्यसि ।
सा नेति प्रत्युवाचेन्द्रं प्रभावादासुरस्य हि[३] ॥२३॥
तां जघान तदा क्रुद्ध उद्गिरन्तीं पयस्ततः ।
जगाम सा भयोद्विग्ना पुनरेव पणीन् प्रति ॥२४॥
पयसस्तस्य पद्धत्या रथेन हरिवाहनः ।
गत्वा जघान च पणीन् गाश्च ताः पुनराहरत् ॥२५॥
तेऽवदन्[ग] वैश्वदेवन्तु जामदग्न्यस्तथाप्रियः[४] ।

---

(१) पेति क॰ ख॰ घ॰ ।
(२) पर इति ग॰ ।
(३) स्थिति क॰ ग॰ घ॰ च॰ ।
(४) ख॰ चिह्नितपुस्तके एतच्चतुर्थपादं न विद्यते । तत्र चास्मिन् स्थले,
वे च त वैश्वदेव स्यात् यथामाया शुक्रभौमौ ।
दामदग्निकमिद्धाश्या प्रियस्तामव परः ।
जगन्त युगपत् सर्वे वैश्वदेवास्त्रिभिः परैः ।
इति पाठो वर्त्तते ।

(ग) ऋ॰ १०, १०८, १ ।

आग्नेयं वैश्वदेवञ्च अय(क)मित्यृच तु द्व्यृचाः(१)।
शार्ङ्गास्त्वत्र ऋषयो अग्निमार्चन् पृथक् पृथक् ॥५२॥
आश्विनं त्वग्नि(ख)रित्येतदय(ग)मैन्द्रं ततः परम्।
इमां खनामी(घ)ति सूक्तमिन्द्राणी यत्स्वयं जगौ ॥५४॥
तदौपनिषदं सूक्तं भाववृत्तं प्रचक्षते।
(२)अरण्यान्य(ङ)त्यरण्यान्याः स्तुतिरैन्द्रे तदुत्तरे ॥५५॥
सावित्रं सविता यन्त्रैः(च) वसिष्ठस्त्वग्निं समिध्यसे(छ)।
आग्नेयं श्रद्धया(ज) श्राद्धं मेधासूक्तमतः परम् ॥५६॥
आग्नेयमाहुरित्यप्सास्व(झ) ऐन्द्रे ततः परे।
सोम एकेभ्य(ञ) इत्येतद्भाववृत्तं प्रचक्षते(३) ॥५७॥

---

(१) द्व्यृचा इति ग०।
(२) ख० चिह्नितपुस्तके अरण्यानीति श्लोकात् प्राक्, उत्तरार्धमध्ये पाठान्तरत्वेनेति सूक्ते मन्त्रावधिम्। पतिसंवननीं त्वं यान्याः सपत्नापनोदिकाम्। इत्यधिकं पठितम्।
(३) वदन्ति त्विति ख०।

---

(क) ऋ० १०, १४२, १। (ख) ऋ० १०, १४३,१। (ग) ऋ० १०,१४४,१।
(घ) ऋ० १०, १४५, १। (ङ) ऋ० १०,१४६ १। (च) ऋ० १०,१४९,१।
(छ) ऋ० १०, १५०, १। (ज) ऋ० १०,१५१,१। (झ) ऋ० १०,१५२,१।
(ञ) ऋ० १०, १५४, १।

शौनको वैश्वदेवन्तु मन्यते शाकटायनः।
सूक्तेऽस्मिन् देवतास्तिस्र एता एव प्रकीर्त्तिताः[१] ॥५८॥
यदरायी[क]त्यसच्चौघं तत्र चत्तो[ख] इति हृचे।
प्राधान्याद्वा निपाताद्वा स्तूयते ब्रह्मणस्पतिः ॥५९॥
इन्द्रस्यैव य[ग]दित्यस्यां विश्वेदेवाः परो[घ] त्यृचि।
आग्नेयं चाग्नि[२][ङ]मित्येतद्वैश्वदेवमिमा नु कम्[च] ॥६०॥
इन्द्रः प्राधान्यतस्तत्र[३] विश्वेदेवैः सह स्तुतः।
आदित्यैश्च मरुद्भिश्च तथारूपं हि दृश्यते ॥६१॥
सूर्यो न[छ] इति सौर्यन्तु यत्तेतदृशा[ज]विति।
पौलोमी स्वान् गुणांस्तत्र सपत्नीनां प्रशंसति ॥६२॥
ऐन्द्र[४] तौमस्य[झ] सुवामि[ञ] भेषज्यं यक्ष्मनाशनम्।
राजयक्ष्मघ्नं सूक्तं प्राजापत्यं तदुच्यते ॥६३॥
ऐन्द्राग्नं मन्यते यास्क एके चिन्त्योक्तदेवतम्।

---

(१) शौनको वैश्वदेवन्त्वित्यादि एता एव प्रकीर्त्तिता इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेक्ष्यते।
(२) स्वग्निमिति ख०।
(३) प्रधानतो वाचेति ख०।
(४) इन्द्रमिति ख०।

---

(क) ऋ० १०, १४४, १। (ख) ऋ० १०,१४५,१। (ग) ऋ० १०,१४४,४।
(घ) ऋ० १०, १४५, १। (ङ) ऋ० १०,१४६,१। (च) ऋ० १०,१३७,१।
(छ) ऋ० १०, १४८, १। (ज) ऋ० १०,१४६, १। (झ) ऋ० १०,१६०,१।
(ञ) ऋ० १०, १६१, १।

गर्भस्रावप्रयुक्तं[1] यस्तेतद्ब्रह्मणे[क]ति [redacted] ॥६४॥
स्रवतामपि गर्भाणां दृष्टन्तदनुमन्त्रणम् ।
वैन्यन्तु वेनस्तत्पश्य[2] दचौभ्या[ख] यक्ष्मनाशनम् ॥६५॥
दु.स्वप्नघ्नमपेही[ग]ति निपातीन्द्रोऽग्निरेव तु ।
आशीर्वृषि[3]र्दीर्घतपा.[4] कपोतो नाम नैर्ऋतः ॥६६॥
चक्रे[5]कपोतस्तस्याग्नावग्निधाने पदद्विष ।
स त[6]मात्मच्छितैर्वाक्यैः कपोत स्तुतवानृषि.[7] ॥६७॥
देवा [घ]इति तु सूक्तेन प्रायश्चित्तार्थमुच्यते ।
ऋषभ मा[ङ] सपत्नघ्न येनेदमिति मानसम् ॥६८॥
तुभ्ये[च]त्यृषी ददृशतुरैन्द्र गाथिनभार्गवौ ।
वरुणो विधानानुमतिर्धाता सोमो बृहस्पति ॥६९॥
षडेता देवतास्तत्र तृतीयायामृचि स्तुता ।
वातस्ये[छ]ति परेणास्तौदनिल पितर स्वकम् ॥७०॥

---

(१) रक्षोघ्नमेयमित्युक्तमिति ख० ग० ।
(२) यपघ्नदित्यर्थे यक्ष्मदित्यार्थः । आवच्छत परस्वेवमिति ख० ।
(३) आशीर्विष इति ख० ।
(४) दीप्ततमाः इति क० घ० च० ।
(५) चकारोदिति क० घ० च० ।
(६) शतमिति ख०, स्तवमिति ग० ।
(७) कपोतो नैर्ऋतस्तदेति क० ग० घ० च० ।

---

(क) ऋ० १०, १६२, १ । (ख) ऋ० १०,१६३,१ । (ग) ऋ० १०,१६४,१ ।
(घ) ऋ० १०, १६५, १ । (ङ) ऋ० १०,१६६, १ । (च) ऋ० १०,१६७,१ ।
(छ) ऋ० १०, १६८, १ ।

मयो भू(क)रिति यत्सूक्तमपश्यच्छबर(१) ऋषिः ।
नानारूपाः पयस्विन्यो गावस्तत्र तु संस्तुताः ॥७१॥
विभ्राट्(ख) सौर्य्यन्त्वन्य(ग)दैन्द्रन्त्वायाही(घ)त्युषसः स्तुतिः ।
आ त्वा(ङ)राज्ञेऽभिषिक्ताय(२)द्वे सूक्ते चानुमन्त्रणे ॥७२॥
प्र व (च)इत्युत्तरं ग्राव्णं ददर्श स्तुतिमार्बुदिः(३) ।
प्लतः(४) परमाग्नेयं तत्रार्भवृक् प्रसूनवः(छ) ॥७३॥
ऋषिर्गौ पतङ्गस्तु पतङ्ग(ज)मिति यत्परम् ।
तार्क्ष्यमेके मन्यन्ते मायाभेदं तथापरे ॥७४॥
मायाभेदे द्वितीयायां वाक् स्तुतेत्याह शौनकः ।
दैवी विभ्रमति मनसापा वाचा विदिता सती(५) ॥७५॥
त्यमू षु(झ)इति तु सौपर्ण(६) सूक्तं स्वस्त्ययनं विदुः ।
उ(ञ)दैन्द्रं वैश्वदेवन्तु प्रथश्चे(ट)ति च यत्परम् ॥७६॥

---

(१) शबरः इति क० ख० घ० ।
(२) अभिषिक्तेति ग० ।
(३) आर्बुदः इति ख० ।
(४) प्लत इति क० ख० घ० ।
(५) मायाभेदे द्वितीयायामित्यादि सा वाचा विदिता सतीत्यन्तपाठः क० ग० घ० ङ० चिह्नितपुस्तकेषु न दृश्यते ।
(६) तार्क्ष्यं वैश्वमिति ख० ।

---

(क) ऋ० १०, १६९, १। (ख) ऋ० १०,१७०,१ । (ग) ऋ० १०, १७१,१ ।
(घ) ऋ० १०, १७२, १ । (ङ) ऋ० १०,१७३, १ । (च) ऋ० १०,१७५,१ ।
(छ) ऋ० १०, १७६, १ । (ज) ऋ० १०,१७७,१ । (झ) ऋ० १०,१७८,१ ।
(ञ) ऋ० १०, १७९, १ । (ट) । ऋ० १०, १८१, १ ।

आत्मप्रभावमाचख्युस्तचास्या रूपमस्य च ।
रथन्तरं यथा स्तोत्र स्तोत्रञ्चैव यथा बृहत् ॥७७॥
यथा च सम्भृतो घर्मः सवितुश्चोपलक्ष्यते(१) ।
बृहस्पति(क)रिति तस्मिन् स्तुत सूक्ते बृहस्पतिं ॥७८॥
आग्नेयो यजमानस्य केचिद्देता स्तुतिं विदुः(२) ।
प्राजापत्यस्य यत् सूक्तमपश्यत् त्वा(ख)प्रजावत ॥७९॥
प्रत्यृच देवता स्तौति लिङ्गैरेवात्र देवता(३) ।
आग्नेय पुत्रकामस्य प्रथमा हि वदत्यथ ॥८०॥
द्वितीया पुत्रकामायास्तृतीयात्मस्तव(४)स्तुपे ।
यद्विष्णु(ग)रिति सूक्तन्तु वैश्वदेवं प्रचक्षते ॥८१॥
तस्मिन् स्वदारगर्भार्थमृषिराग्नास्त आग्नेय ।

---

(१) वादश्चैवात्र दृश्यते इति क० घ० च० ।
(२) बृहस्पतिरिति तस्मिन्नित्यादि केचिद्देता स्तुतिं विदुरित्यन्तपाठः ख० चिह्नितपुस्तके न विद्यते । तत्र अस्मिन् स्थले, सूक्तेऽस्मिन् देवतास्तिस्र एता एव प्रकीर्त्तिता इति श्लोकार्द्धं वर्त्तते ।
(३) एवार्धलक्षिता इति ख०, एष श्लोकः क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(४) आत्मस्तवमिति ग० ।

---

(क) ऋ० १०,१८२,१ । (ख) ऋ० १०,१८३,१ । (ग) ऋ० १०,१८४,१ ।

परन्तु[१] नैजमेष हि[२] गर्भार्थं ताव[३]दुच्यते ॥८२॥
माहिच यन्महि चौणा[क]मादित्याना स्तुति विदु[४] ।
सूर्यवरुणमित्राणामादित्येष्वितरेषु तु[५] ॥८३॥
एत[६] एव चयो वाला स्तुता. स्वस्त्येष्व[७]तोऽन्यथा ।
प्राग्न्यर्थं सूक्तमेतद्धि पावन चैव विश्रुतम् ॥८४॥
पातमपि स्वस्त्ययने दृष्ट तदनुमन्त्रणम्[८] ।
उलोऽस्तौत्पितर वातमाग्नेय प्राग्नये[ख] परम् ॥८५॥
विसृष्ट जातवेदस्य प्रे[ग]ति दाशतयीषु[९] तु ।
यत्किञ्चिदेव त्वा[१०]ग्नेय जातवेदसमुच्यते ॥८६॥
आयङ्गौ[घ]रिति यत्सूक्त सार्पराज्ञी[११]स्तव जगौ ।

(१) परे त्विति ख० ।
(२) नैजमेवेतीति ख० ग० ।
(३) वा तदि क० घ० च० ।
(४) ध्यादित्येष्वितरेषु त्विति क० घ० च० ।
(५) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(६) एक इति क० घ० च० ।
(७) स्वस्त्येष्विति ख० ।
(८) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(९) दाशतयीष्विति ख० ।
(१०) अन्यत्रेति ख० ग० ।
(११) सर्पराज्ञीति क० घ० च० ।

(क) ऋ० १०, १८५, १ । (ख) ऋ० १०, १८७,१ । (ग) ऋ० १०,१८८,१ ।
(घ) ऋ० १०, १८९, १ ।

तस्मात् सा देवता(१) तत्र सूर्य्यमेके प्रचक्षते ॥८७॥

मुद्गल शाकपूणिश्च आचार्य्यश्च रथीतर(२) ।

विश्वानाधिष्ठिता वाच मन्यन्ते मध्यृच स्तुताम् ॥८८॥

भाववृत्तपर(३) सूक्त ददर्शाघमर्षण ।

पर न विद्यते तस्माच्छान्त्यै वा पावनाय वा ॥८९॥

यथाश्वमेध क्रतुराट् सर्व्वैरिप्रणोदन(४) ।

तथाघमर्षण ब्रह्म सर्व्वैरिप्रणोदन(५) ॥९०॥

तदादौमि(६) तु यज्ञात सज्ञान ज्ञामसस्तव ।

चतुर्थं यत्तु नैर्ऋतं तत्सपत्ननिवर्हणम्(७) ॥९१॥

ससमित्(क) माध्वराणाञ्चेत्याग्नेये एव ते स्मृते(८) ।

---

(१) तस्य स्याद्देवतेति क॰ ख॰ ग॰ घ॰ ।

(२) आचार्य्यः शाकटायन इति ख॰ ग॰ ।

(३) भाववृत्तमसमिति क॰ ग॰ घ॰ ।

(४) सर्व्वैरिप्रणोदन इति ख॰ ।

(५) यथाश्वमेध क्रतुराट् इत्यादि सर्व्वैरिप्रणोदनमित्यन्तपाठ क॰ ग॰ घ॰ चिह्नितपुस्तकेषु नापश्यत ।

(६) त्वदादौनीति क॰ ग॰ घ॰ ।

(७) चतुर्थस्तैक्तस्य यत्तत्सपत्नीनिवर्हणमिति क॰ ग॰ घ॰ ।

(८) उभे तत्राग्निदेवते इति क॰ ग॰ घ॰ ।

---

(क) ऋ॰ १०, १९१, १ ।

उशना वरुणश्चेन्द्रश्चाग्निश्च सविता स्तुताः ॥८२॥
संज्ञानं प्रथमस्या[1]न्तु द्वितीयस्यामथाश्विनौ[2] ।
तृतीया चोत्तमे च द्वे आशिषोऽभिवदन्ति ताः[3] ॥८३॥
इन्द्रः पूषा सपत्नघ्ने द्वितीयस्यामृचि स्तुतौ ।
देवानामितराः प्रोक्ता आशीर्वादपराश्च याः[4] ॥८४॥
[5]महानाम्न्य ऋचो गुह्यास्ता ऐन्द्र्यश्चैव यो वदेत् ।
सहस्रयुगपर्यन्तं सोऽहं ब्रह्म स राध्यते[6] ॥८५॥
[7]पुरीषपदमाषान्तु प्रथमं स्यात्प्रजापतेः[8] ।

---

(१) प्रथमायामिति पाठः शुद्धः ।
(२) उशना वरुणश्चेन्द्र इत्यादि द्वितीयस्यामथाश्विनावित्यन्तपाठः क॰ ख॰ ग॰ चिह्नितपुस्तकेषु न दृश्यते ।
(३) स त्वाशीर्वाद उच्यते इति क॰ ख॰ ग॰ ।
(४) एष श्लोकः क॰ ख॰ ग॰ चिह्नितपुस्तकेषु नेष्यते ।
(५) ख॰ चिह्नितपुस्तके महानाम्न्य इति श्लोकात्प्राक्, संवसंज्ञानमित्येते चैवमनं विदुरिति श्लोकार्द्धं वर्त्तते ।
(६) राध्यतीति पाठः साधुः, सोऽहं प्राप्य स्वराध्यते इति क॰ ग॰ घ॰, साहं प्राप्य स्वर्गं ध्यास्ते इति ख॰ ।
(७) त्वमिद्दैवतमिति ख॰ ।
(८) ख॰ चिह्नितपुस्तके पुरीषपदमाषान्त्विति श्लोकात् प्राक्,—
त्रिधाधर्म्मेयाश्रिताः सूक्तानाह-
स्त्रिंशत् सूनेः दृश्यते यः सूक्तभावः ।
प्रधानसूक्तं त्रिष्ट देवताया
सूक्तभाजः सन्ति प्रोक्तंन ॥

आग्नेयमैन्द्रं वैष्णव्यं पौष्णं दैवन्तु पञ्चमम्[१]।८६॥
अग्ने प्रयाजानुयाजाः प्रैषा ये च[२] हवींषि च।
यद्दैवतं हविस्तु स्यात्प्रैषास्तद्देवतास्तु[३] ते।८७॥
निविदो निगदानाञ्च खे खिलेष्वेव देवता[४]।
निगदेन[५] निगद्यन्ते याश्च कल्पानुगाश्च याः॥८८॥
अग्नेरेव तु गायत्र्य उष्णिह[६] सवितुः स्मृता।
अनुष्टुभस्तु सोमस्य बृहत्यस्तु बृहस्पतेः॥८९॥

---

ऐन्द्रा ऋचो महानाम्नीस्तु विद्या
तथा हि दृष्टं ब्राह्मणसूक्तशब्दः।
न दृश्यते सूक्तशब्दो न विप्नु
यथा प्रैषेष्वाश्वसूक्ताभिधानम्॥

सूक्तैकदेशा इति तान् प्रतीया
दन्याश्च कुन्या मदशो निवन्ना।
यथैतयो देवि निपादि वक्षा
कुन्ताये तत्सूक्तमेकं सूक्तम्॥
इत्यधिकपाठोऽस्ति।

(१) विन्द्र त्वा वैष्णवश्चैव पौष्णश्चैव भव परमिति ख०।
(२) एवति क० घ० च०।
(३) चेति ख०।
(४) लिङ्गोक्तदेवता इति क० ग० घ०।
(५) निगदेष्विति ख०।
(६) उष्णिक् इति ख०, उष्णिहेति ग०।

पङ्क्तयस्त्रिष्टुभश्चैव विद्यादैन्द्र्यश्च सर्व्वशः।
विश्वेषां चैव देवानां जगत्यो याश्च काश्चन ॥१००॥
विराजश्चैव मित्रस्य स्वराजो वरुणस्य च।
विषये यस्य वा स्यातां स्यातां वा वायुदेवते ॥१०१॥
इन्द्रस्यातिधृतिः प्रोक्ता वायोश्च भुरिजः स्मृताः[१]।
धात्वतिच्छन्दसः काश्चित्ताः प्रजापतिदेवताः[२] ॥१०२॥
विच्छन्दसस्तु वायव्या मन्त्राः पादैश्च ये मिताः।
पौरुषा द्विपदाः सर्व्वा ब्राह्म्य एकपदाः स्मृताः[३] ॥१०३॥
समस्ता ऋच आग्नेय्यो वायव्यानि यजूंषि च।
सौर्य्याणि चैव सामानि सर्व्वाणि ब्राह्मणानि च ॥१०४॥
वैश्वदेवो वषट्कारो हिङ्कारो ये यजामहे।
रूपं वज्रस्य वाक्पूर्ब्बं स्वाहाकारोऽग्निदैवतः ॥१०५॥
देवानाञ्च पितॄणाञ्च नमस्कारः स्वधैव[४] च।
स्पृष्टो मूर्द्धनि विज्ञेयस्तालव्यः प्रथमः स्वरः ॥१०६॥
द्वितीयस्तु भ्रुवोर्मध्ये तृतीयः कर्णसंश्रितः।
चतुर्थो नासिकाग्रे स्यादोष्ठ्यो मन्द्र उच्यते ॥१०७॥

---

(१) एतच्छ्लोकार्द्धं क॰ घ॰ ध॰ चिह्नितपुस्तकेषु न पठितम्।

(२) एतच्छ्लोकार्द्धं ख॰ चिह्नितपुस्तके न दृश्यते।

(३) द्विपदा पौरुषं छन्दो ब्राह्मी स्वेकपदा स्मृता इति ख॰।

(४) स्वधेति ख॰।

मन्द्रकर्षणप्रयुक्तमतिस्वारं प्रयच्छति(१)।
वदन्ति देवता कुष्ट मनुष्यास्तितरैस्त्रिभिः(२) ॥१०८॥
द्वितीय वसव(३) सर्व्वे गन्धर्वाप्सरस स्वरम्।
अण्डजाः पक्षिणः सर्पाश्चतुर्थमुपभुञ्जते(४) ॥१०९॥
मन्द्रं पिशाचा रक्षांसि असुराश्चोपभुञ्जते(५)।
अतिस्वार(६) तु ग्रेष्यं जङ्गमस्थावरस्य च ॥११०॥
वैश्वदेवस्वरं क्रुष्टो नित्यं यो मूर्ध्नि तिष्ठति(७)।
तालव्यं प्रथमं धाम्ना स्वरं आदित्यदैवतं(८) ॥१११॥
स्वरो द्वितीयः साध्यानां भ्रुवोर्देशश्रितश्च यः(९)।
आश्विनस्तु(१०) तृतीयोऽयं स्वरः कर्णवमाश्रितः ॥११२॥
चतुर्थस्तु(११) वायव्यो नासिक्यः स्वर उच्यते।

---

(१) तु न विदुरिति ख०।
(२) सर्व्वा मनुष्या प्रथमं स्वरमिति ख०।
(३) प्रश्रवः इति ख० ग०।
(४) तूपभुज्यते इति क० घ० च०, चतुर्थञ्चोपभुञ्जते इति ख०।
(५) एवचतुर्थोकाद्व क० ग० घ० चिह्नितपुस्तकेषु नोपलभ्यते।
(६) अतिस्वार्य्यं इति क० ग० घ०, अतिचार इति ख०।
(७) ख० चिह्नितपुस्तके, वदन्ति देवता क्रुष्टमित्यादि नित्यं यो मूर्ध्नि तिष्ठतीत्यन्त, द्वितीयस्तु भ्रुवोर्मध्ये इति श्लोकात् प्राक् पठितं।
(८) चैदन्त्य एव स्तिति क० घ० च०।
(९) देश समाश्रित इति ख० ग०।
(१०) आग्नेयस्त्विति क० घ० च०।
(११) लेषु इति क० घ० च०।

पञ्चमस्तु स्वरः प्रोक्तश्चाक्षुषः सूर्य्यदैवतः[1] ॥११३॥
यस्तु सामस्वरः षष्ठः[2] स सौम्यो मन्द्र उच्यते।
विकर्षेण तु मन्द्रस्य[3] युक्तोऽतिस्वार्य्य उच्यते ॥११४॥
स मैत्रावरुणो ज्ञेयो मन्द्रस्थानसमाश्रितः[4] ॥
सामस्वराणां सप्तानामेते देवा इहोदिताः[5] ॥११५॥
त्रयाणामितरेषां तु लोकाधिपतयस्त्रयः।
वाग्देवत्योऽथ वाग्नेयः प्रस्तावश्चैव सामसु ॥११६॥
उद्गीथोपद्रवावैन्द्रौ स्यातां वा वायुदेवते।
सौर्य्यः स्यात्प्रतिहारोऽथ निधनं वैश्वदेवतम् ॥११७॥
हिङ्कारप्रणवाख्यान्तु पुरस्तादेव कीर्त्तनात्।
इति यस्समस्तानां मन्त्राणामिह दैवतम्।
देवताविद्वेवेत्त प्रयोगे सर्व्वकर्म्मणाम् ॥११८॥
सप्तर्षयो वसवश्चापि देवा
अथर्व्वाणो भगवः सोमसूर्य्याः[6]।

---

(१) शतपञ्चाशाङ्कं क० घ० च० चिह्नितपुस्तकेषु नास्ति।
(२) षष्ठ इति क० घ० च०।
(३) कर्षणेनैव मन्द्रस्येति क० घ० च०, विकर्षेण तु मन्द्रस्येति ग०।
(४) मन्द्रस्थानसमाश्रितः इति क० घ० च०, मन्द्रस्थानसमाश्रित इति ग०।
(५) इति सप्तानां सामानामुक्ताः सामसु देवताः इति क० घ० च०।
(६) षंगोऽथर्व्वा इति क० घ० च०।

पथ्यास्वस्ती रोदसी द्यौश्चमन्वे
कुहूर्गुङ्गुरदितिर्धेनुरघ्न्या ॥११८॥
असुनीतिरिळा वा धी[1] विधातानुमतिर्दया ।
अङ्गिरोभि सहैता सूक्तमन्त्रास्तु देवता ॥१२०॥
वैश्वानरो हि[2] सुपर्णो विवस्वान्
प्रजापतिर्गौः सुधन्वा मगोध[3] ।
अपा नपादर्य्यमा वातजूति-
रिळस्पतिश्चैव रथस्पतिश्च ॥१२१॥
ऋभव पर्ज्जन्य पर्व्वताश्च[4] पत्नी
दक्षो भगो[5] देवपत्नीर्दिगश्च ।
आदित्या रुद्रा पितरोऽथ साध्या
निपातिनो वैश्वदेवेषु सर्व्वे ॥१२२॥
अनुक्रान्ता देवता सूक्तभाजो
हविर्भाजश्चोभयथा निपाते ।
अथैव स्यादुभयथान्यथा वा
न प्रत्यक्षमनृषेरस्ति मन्त्र ॥१२३॥

---

(१) स्यादिति ख॰ ग॰ ।
(२) द्यो सुधन्वा गोभ्य इति क॰ घ॰ च॰, न नद्य इति ग॰ ।
(३) अपीति ख॰ ग॰ ।
(४) वा गावश्चेति क॰ घ॰ च॰ ।
(५) भर्गः इति ग॰ ।

योगेन दाक्ष्येण दमेन बुद्ध्या
वाङ्मृत्येन तपसा नियोगैः[१]।
उपास्त्व्याः[२] कृत्स्नशो देवता या[३]
ऋचो ह यो वेद स वेद देवान्।
यजूंषि यो वेद स वेद यज्ञान्
सामानि यो वेद स वेद तत्त्वं ॥१२४॥

असौ मे पुत्रकामाया अब्दादूर्द्धं च त[४]त्कृतम्।
आग्निपो योगमेतं हि वाह्नौ गोर्यन[५] मन्यते ॥१२५॥

एकारमनुकम्पार्थे नाम्नि स्मरति माठरः।
आख्यातभूतकरणं[६] वाक्कुला स्त्री ययौ इत ॥१२६॥

मन्त्राणां देवताविद्यः प्रयुङ्क्ते कर्म कर्हिचित्।
जुषन्ते देवतास्तस्य[७] हवि[८]र्वा[९]देवताविदः ॥१२७॥

अविज्ञानप्रदिष्टं[१०] हि हविर्नाश्नन्ति देवताः।

---

(१) अभियोगैरिति ख०।
(२) उपास्यास्ताः इति ख० ग०।
(३) देवतस्येति क० घ० च०।
(४) स वागर्द्धेन यदिति क० घ० च०।
(५) वह्नौ गौर्वेन्निति ख०।
(६) आख्याते भूतकरणमिति ख०।
(७) तस्येति ग०।
(८) हविर्व्वेति ख०।
(९) नेति क० ग० घ० च०।
(१०) अविज्ञातप्रदिष्टमिति क० घ० च०।

तस्मान्मनसि मन्त्रस्य देवतां जुहुयाद्धवि ॥१२८॥
स्वाध्यायमेव(१) योऽधीते मन्त्रदैवतविच्छुचि ।
स यज्ञसदिव (२)स्वर्गं सत्रसद्भिरपीज्यते(३) ॥१२९॥
नियमोऽयं जपे होमे ऋषिश्छन्दोऽथ दैवतम् ।
अन्यथा चेत् प्रयुञ्जानस्तत्फलाच्चाव हीयते ॥१३०॥
ऋषिश्छन्दोदैवतादिज्ञानं यज्ञादिषु श्रुतम् ।
तदाश्रित्य प्राणवृष्टिर्विहिताचेति गम्यताम् ॥१३१॥
अविदित्वा ऋषिश्छन्दोदैवतं योगमेव च ।
योऽध्यापयेज्जपेद्वापि पापीयान् जायते तु सः ॥१३२॥
अर्थेप्सव ऋषयश्छन्दोभिर्देवता पुरा ।
अभ्यधावन्निति छन्दो मध्ये माङ्कर्मेवर्षय ॥१३३॥
ऋषिन्तु प्रथमं ब्रूयाच्छन्दस्तु तदनन्तरम् ।
देवतामथ मन्त्राणां कर्मस्वेवमिति श्रुतिः ॥१३४॥
आसन्न वा अनासन्न(४) विविच्यात्मानमात्मनि ।
ईक्षमाणो ह्युभौ सन्धिमृचो दैवतवित्पठेत् ॥१३५॥
स ब्रह्मामृतमत्यन्तं योनिं सदसतोर्ध्रुवम् ।
महद्वाणु च विश्वेशं विशति ज्योतिरुत्तमम् ॥१३६॥

इति शौनकाचार्यकृतायां बृहद्देवतायामष्टमोऽध्यायः ॥

समाप्ता बृहद्देवता ॥

---

(१) उतेति क॰ ख॰ च॰ ।
(२) यसयसदपीति ग॰ ।
(३) अपीध्यते इति क॰ ख॰ च॰ ।
(४) आत्मान वाप्यनधारमिति ख॰, आत्मान वाप्यनाधारमिति ग॰ ।

श्रीः

# अथार्षानुक्रमणी ।

## प्रथमं मण्डलम् ।

ऋग्वेदमखिलं ये हि द्रष्टारो मुनिपुङ्गवाः ।
तदनुक्रमणायाहं नमामि परमेश्वरीम् ॥१॥
अथाग्निमीळ इत्यादि प्रथमं मण्डलं प्रति ।
शतर्चिनस्तु विज्ञेया ऋषयः सुखसिद्धये ॥२॥
तेषां पूर्वो मधुच्छन्दा मेधातिथिरनन्तरः ।
शुनःशेपस्तृतीयोऽयं हिरण्यस्तूप उत्तरः ॥३॥
कण्वस्तु पञ्चमः षष्ठः प्रस्कण्वः सव्य उत्तरः ।
नोधाः पराशरश्चान्यो गोतमः कुत्स उत्तरः ॥४॥
कश्यपस्त्वथ कक्षीवान् परुच्छेपस्तदुत्तरः ।
दीर्घतमास्ततोऽगस्त्यः षोडशैते शतर्चिनः ॥५॥
ऋचां शतानि दृष्ट्वा(क)देत एव शतर्चिनः ।
जेतादीनान्तु तथाप्ति तथाप्येते शतर्चिनः ॥६॥

---

(क) एतासां दृष्ट्वादिति पाठो भवितुमर्हति ।

तत्र त्वादित आरभ्य सूक्तानां दशकं प्रति ।
वैश्वामित्रो(क) मधुच्छन्दा ऋषिरित्यवगम्यताम् ॥७॥
इन्द्रं विश्वा(११)(ख) इति तस्य जेता तस्य सुतो मुनिः ।
अग्निं दूत(१२)मुपक्रम्य सूक्ताद्द्वादशकं प्रति ॥८॥
काण्वो मेधातिथिर्नाम मुनिरित्यवगम्यताम् ।
कस्य नून(२४)मुपक्रम्य सूक्तानां सप्तकं प्रति ॥९॥
आजीगर्त्तिं शुनःशेप ऋषिरित्यवगम्यताम् ।
अयन्तु देवरातारव्यो वैश्वामित्रस्य कृत्रिमः ॥१०॥
त्वमग्न(३१) इत्युपक्रम्य सूक्तानां पञ्चकं प्रति ।
हिरण्यस्तूपनामायमृषिराङ्गिरसः सुतः ॥११॥
प्र वो यह्व(३६)मुपक्रम्य सूक्तानामष्टकं प्रति ।
घोरस्य पुत्रः कण्वोऽयमृषिरित्यवगम्यताम् ॥१२॥
(ग) अभि त्यं मेष(५१)मित्यादिसूक्तानां सप्तकं प्रति ।
सव्यो हि नामाङ्गिरस ऋषिरित्यवगम्यताम् ॥१३॥
नू चित्सहोजा(५८) इत्यादि सूक्तानां सप्तकं प्रति ।
गौतमस्य सुतो नोधा ऋषिरित्यवगम्यताम् ॥१४॥

---

(क) विश्वामित्र इति क० ।
(ख) (११) चिह्नमानेन सूक्तसङ्ख्या परिच्छेदा । एवं परत्रापि । मन्त्रसङ्ख्या तु मूलत एवावगम्यताम् ।
(ग) अग्ने विवस्वद्(४४)आदि सूक्तानां सप्तकं प्रति ।
कण्वस्य पुत्रः प्रस्कण्व ऋषिरित्यवगम्यताम् ।
इदं श्लोकोऽस्मात् पूर्वं भवितुमर्हति । सर्वानुक्रमण्यादौ तथैवोपलम्भात् ।

यथा न ताय्(९४)मित्यादिसूक्तानां नवकं प्रति ।
शाक्त्यः पराशरो नाम ऋषिरित्यवगम्यताम् ॥१५॥
उपप्रयन्त(७७) इत्यादिसूक्तानां विंशतिं प्रति ।
राहूगणो गोतमो(क)ऽयमृषिरित्यवगम्यताम् ॥१६॥
इमं स्तोम(९४)मुपक्रम्य सूक्तानां पञ्चकं प्रति ।
कुत्सो हि नामाङ्गिरस ऋषिरित्यवगम्यताम् ॥१७॥
जातवेदस(९९) इत्यस्मिन् मारीचः काश्यपो मुनिः ।
स यो वृषे(१००)ति सूक्तस्य ह्यषयो वार्षागिराः ॥१८॥
ऋज्राश्वः प्रथमस्तेषां भयमानसुराधसौ ।
सहदेवोऽम्बरीषश्च तेऽत्र सूक्ते प्रकीर्त्तिताः ॥१९॥
चन्द्रमा(१०५) इति सूक्तस्य त्रित आप्त्योऽथवा ऋषिः ।
नासत्याभ्या(११६)मुपक्रम्य सूक्तेष्वेकादशस्वथ ॥२०॥
कक्षीवान् दैर्घतमस औशिक्सूनुः स एव च ।
भावयव्यस्तु राजायमृषिरा गधिते(१२६,६)त्यृचः ॥२१॥
तद्भार्या रोमशा नामोपोत्तमस्या उपोत्तमे ।
अग्निं होतार(१२७)मित्यादिसूक्तेष्वेव चयोदश ॥२२॥
दैवोदासिः परुच्छेपो राजैवायमृषिर्मतः ।
वेदिषदे(१४०)प्रभृतीनां सूक्तानां पञ्चविंशतेः ॥२३॥
दीर्घतमा नामौचथ्य ऋषिरित्यवगम्यताम् ।
कया शुभेतिसंवाद इन्द्रादीनां हि तत्र स ॥२४॥

---

(क) गौतम इति ख० ।

कया शुभे(१६५)त्युपक्रम्य युग्मामासामृचां पुनः ।
एकादश्या(क)श्चायमिन्द्र ऋषिरित्यवगम्यताम् ॥२५॥
ऋषयो मरुतस्तत्र तृतीयाद्ययुजामृचाम् ।
सूक्तस्यान्त्ये तृचेऽगस्त्य ऋषिरित्यवगम्यताम् ॥२६॥
अगस्त्य एव नत्वा(१६६)दि मित्रावरुणयो(ख) सुत ।
षड्विंशतेश्च सूक्तानामृषिरित्यवगम्यताम् ॥२७॥
इन्द्रागस्त्ययो संवादो न नून(१७०)मिति तच्च तु ।
प्रथमायास्तृतीयाया ऋचोरिन्द्र ऋषि स्वयम् ॥२८॥
उभौ वाथ चतुर्थ्यास्तु तयोरन्यतरोऽथवा ।
पूर्व्वी(१७९)रिति च सूक्तस्य संवादस्य तृचास्त्रय ॥२९॥
लोपामुद्रा तृचे पूर्व्वे अगस्त्यो मध्यमे तृचे ।
अन्तेवासी ब्रह्मचारी सूक्तस्यान्ते तृचे मुनि ॥३०॥

इति प्रथमं मण्डलम् ।

---

(क) एकादश्या इति क० ।
(ख) तन्वादिमित्रावरुणयोरिति घ० च० ।

# अथ द्वितीयं मण्डलम् ।



मध्यमेष्वृषयो ज्ञेया मण्डलेष्वथ मध्यमाः ।
तत्र त्वमग्न(१) इत्यादिद्वितीयं मण्डलं प्रति ॥१॥
ऋषिर्गृत्समदो नाम विज्ञेयः स च शौनकः ।
औरसः शुनहोत्रस्य शुनकस्यैव कृत्रिमः ॥२॥
तस्मादाङ्गिरसः पूर्वं पश्चाच्च भृगुतां गतः ।
हुवे व(४) इति सूक्तानां तत्रापि च चतुष्टये ॥३॥
सोमाहुतिर्भार्गवोऽयमृषिरित्यवगम्यताम् ।
इमा गिर(२७) उपक्रम्य सूक्तानां त्रितयं प्रति ॥४॥
ऋषिः कूर्म्मो गार्त्समदः स्वयं गृत्समदोऽथ वा ॥५॥

इति द्वितीयं मण्डलम् ।



# अथ तृतीयं मण्डलम् ।



सोमस्य मे(१)त्युपक्रम्य तृतीयं मण्डलं प्रति ।
विश्वामित्र इति ज्ञेयः स च गाथिसुत(क) स्मृतः ॥१॥
वृषभो द्वे प्र व(१२) सूक्ते विश्वामित्रसुतो जगौ ।
विपाजये(१४)ति सूक्ते द्वे कात्योत्कील ऋषिर्जगौ ॥२॥
समिध्यमानो(१७) द्वे सूक्ते वैश्वामित्रः कतो जगौ ।
अग्निं होतार(१८)मारभ्य गाथी नाम स कौशिकः ॥३॥
सूक्तान्यपश्यच्चत्वारि सूक्ते निर्मथिते परे ।
देवश्रवोदेववातावृषी एतौ हि भारतौ ॥४॥
कुशिकः ग्रावदि(२१)त्यस्मिन्नैषीरथसुतो मुनिः ।
अथवा मण्डलद्रष्टा विश्वामित्रो यथा श्रुतिः(ख) ॥५॥
प्र पर्वताना(२२)मित्यस्मिन् विपाडित्येवमादिभिः ।
नदीभिः सह संवादो विश्वामित्रस्योक्तितोर्या ॥६॥
अष्टमी दशमी षष्ठी चतुर्थी च नदीवचः ।
शिष्टा या नवसूक्तस्य विश्वामित्रवचांसि ताः ॥७॥
अन्त्ये प्रथन्वी(२९,३०)त्येतस्यां घोर आङ्गिरसो मुनिः ।

---

(क) गाथीसुत इति क० ।

(ख) मुनिरिति ख० ।

(२९,३०) चिह्नमानस्य सूक्तसङ्ख्या ऋक्सङ्ख्या च अवगन्तव्या । एव मर त्रापि।

निर्दिश्यमानेऽपि श्रूयते[क] सा न शस्यते ॥८॥
अभि तष्टेव(२८) सूक्तस्य वैश्वामित्रः प्रजापतिः ।
वाच्यो वा स उभौ वा तौ विश्वामित्रोऽथवा श्रुतेः ॥९॥
इमं महे(२९) उपक्रम्य सूक्तानां त्रितयं प्रति ।
अयमेव ऋषिर्विद्यादुत्कीलः प्रजापतिः ।
भार्गवो जमदग्निर्वा मण्डलान्त्ये तृचेऽप्यृषिः ॥१०॥

इति तृतीयं मण्डलम् ।

---

(क) शस्यमानेति श्रूयते इति ज० ।

## अथ चतुर्थं मण्डलम् ।

त्वां ह्यग्ने सद(१)मित्यादि चतुर्थं मण्डलं प्रति ।
गौतमो वामदेवो[क]ऽस्मर्षिरित्यवगम्यताम् ॥१॥
अयं पन्थास्तु संवाद इन्द्रादेः सूक्तमच तु ।
अयं पन्था(१८) इति त्वस्य अच इन्द्रः स्वयं मुनिः ॥२॥
वामदेवस्तु पञ्चानामर्द्धर्चानां ततः परम् ।
न हि न्वस्या(१८,४)दित्यन्तानामर्द्धर्चानां तथादितिः ॥३॥
ममत्तन त्वे(१८,८)त्यादौ गामृचां पञ्चानां एव [illegible] ।
वामदेव ऋषिर्विद्याद्दृचाप्येव विशेषतः ॥४॥
त्रसदस्युः पौरुकुत्स ऋषिः सूक्ते मम द्विता(४२) ।
क उ श्रव[ख](४३)दिति त्वस्य तथा तस्योत्तरस्य च ।
पुरुमीळ्होऽजमीळ्हश्च[ग] सौहोत्रौ तादृशौ सह ॥५॥

इति चतुर्थं मण्डलम् ।

---

(क) गौतमो वामदेवोऽस्येति ज० ।
(ख) मोक्षमूलरसम्पादित ऋग्वेदे क ऊं श्रवदिति पाठोऽस्ति ।
(ग) पुरुमीळ्होऽजमीळ्हेति ज० ।

## अथ पञ्चमं मण्डलम् ।

अबोध्यग्निरुपक्रम्य पञ्चमं मण्डलं प्रति ।
पुत्राद्यैः सह भौमोऽत्रिर्मुनिरित्यवगम्यताम् ॥ १ ॥
अत्र तत्तृकगोत्रा ये ज्ञेयास्तत्त्रिसुता इति ।
अबोध्यग्नि(१)रिति तस्मिन्नृषी बुधगविष्ठिरौ ॥ २ ॥
कुमार(२)मिति चैतस्मिन् कुमारो वा वृषोऽथवा ।
वृशो जार(क) इति ज्ञेय उभौ वाथ समुच्चितौ ॥ ३ ॥
कमेत(१,२)मिति चैतस्मां तथा विश्वोतिषे(१,९)त्यृचि ।
वृष एव ऋषिर्विद्याच्च विकल्पसमुच्चयौ ॥ ४ ॥
त्वमग्न(१) इति सूक्तेषु चतुष्केषु वसुश्रुतः ।
सखायः सं व(७) इत्यस्मिन्निषस्तस्योत्तरेऽपि च ॥ ५ ॥
त्वामग्न(८) इति चैतस्मिन् गयस्तस्योत्तरेऽपि च ।
जनस्य गोपाः(११) सूक्तेषु चतुष्केषु सुतम्भरः ॥ ६ ॥
प्र वेधस(१४) इति तस्मिन् धरुणोऽङ्गिरसः सुतः ।
बृहद्वय(१६) इति तस्मिन् पुरु(ख)स्तस्योत्तरेऽपि च ॥ ७ ॥
प्रातरग्नि(१८)रिति तस्मिन्मृक्तवाहा द्वितो मुनिः ।
अभ्यवस्था(१९)यमग्ने (२०)च सूक्तयोरेतयोर्मुनिः ॥ ८ ॥

---

(क) जान इति सर्वानुक्रमण्यां दृश्यते ।

(ख) पूरुरिति सर्वानुक्रमण्यामुपलभ्यते ।

वव्रिर्नाम मुनिः पूर्वं प्रयस्वन्तस्तदुत्तरे ।
मनुष्वत्त्वे(११)ति सूक्तस्य मघो नाम मुनिः स्मृतः ॥ ८ ॥
प्र विश्वसाम(१२)न्नित्यस्य विश्वसामेत्यृषिः स्मृतः ।
अग्ने सहन्त(१३)मित्यस्य द्युम्नोऽस्य विश्वचर्षणिः ॥ १० ॥
अग्ने त्व(१४) सूक्तमेकर्चां द्वैपदा विद्यते क्रमात् ।
विप्रबन्धुः श्रुतबन्धुः सुबन्धुर्बन्धुरित्यमी ॥ ११ ॥
गौपायना इमे ज्ञेया भ्रातरो लौपायना[क] इति ।
ऋषिरुच्छा व(१५) [ख]इत्यस्मिन्नुत्तरे च वसूयवः ॥ १२ ॥
अनस्वन्ते(१०)ति सूक्तस्य त्रिवृष्णपुरुकुत्सजौ ।
त्र्यरुणत्रसदस्यू द्वावश्वमेधश्च भारत ॥ १३ ॥
ऋग्यानां तिसृणामेषां पूर्वासामितरो वद ।
अथवा भौम एवात्रिस्तूयित्र न प्रस्तुते[ग] ॥ १४ ॥
दानक्रियायमेकस्य दाढ्यमदाढ्यता यत[घ] ।
समिद्धो अग्नि(१८)रित्यस्मिन् विश्ववारात्रिगोत्रजा ॥ १५ ॥
चर्षणी(१९)त्यस्य सूक्तस्य गौरिवीति स शक्तिजः ।
कस्य वीर क(२०) इत्यस्य बभ्रुर्नाम ऋषिः स्मृतः ॥ १६ ॥
इन्द्रो रथाय(२१)सूक्तेऽस्मिन्नवस्यु[ङ]र्नाम सस्मृतः ।

---

(क) लौपायना इति सर्वानुक्रमणी ।
(ख) मोक्षमूलरसम्पादित ऋग्वेदे, ऋच्छ व इति पाठोऽस्ति ।
(ग) प्रस्तुते इति स० पु० ।
(घ) दानक्रियेयमेकस्य दाढ्यत्वादाढ्यता यत इति पाठः सम्भवितुमर्हति ।
(ङ) नावस्युरिति सर्वानुक्रमणी ।

अदर्दरुत्स(२१)मित्यस्य गातुनाम मुनिं स्मृत ॥१७॥
प्राजापत्य संवरण सूक्ते महि महे (२२)जगौ ।
प्रभुवसु(क)राङ्गिरसो यस्ते साधिष्ठ(२३) इत्युभे ॥१८॥
सम्भानुने(२०)त्युपक्रम्य सूक्तानां सप्तकं प्रति ।
अत्रिरेव स्वयं भौम ऋषिरित्यवगम्यताम् ॥१९॥
त्वमग्ने(४४)ति सूक्तेऽस्मिन्नवत्सारो हि काश्यप ।
अन्येषु दशभि साकम्षिरित्यवगम्यताम्(ख) ॥२०॥
सदापृणो यजतो(ग)स्तु बाहुवृक्त सुतम्भर ।
श्रुतवित्तार्थनामा स एवावदो मनस ॥२१॥
ऋत्वभौ इमे चान्ये दृष्टलिङ्गा हि सूक्तके ।
विदा दिव(४५) इति लक्ष्मिऋषिरेव सदापृण ॥२२॥
ऋयो न विदा(४६)नित्यस्मिन् प्रतिचत्र ऋषि स्मृत ।
प्रयुञ्जती(४७)ति सूक्तेऽस्मिन्नपि प्रतिरथ स्मृत ॥२३॥
कद्रू मियाय(४८)सूक्तेऽस्मिन् देव व(४९) इति चोत्तरे ।
ऋषि क्रमेण विज्ञेय प्रतिभानु प्रतिप्रभु(घ) ॥२४॥
विश्वो देवस्य(५०) सूक्तस्य तथैवाग्ने सुतस्य(५१) च ।
उभयोरनयोरेव स्वस्त्यात्रेय इति स्मृत ॥२५॥

---

(क) प्रभूवसुरिति सर्वानुक्रमण्यां ।

(ख) एष श्लोक, ज० चिह्नितपुस्तके, सम्भानुनेत्युपक्रम्येति श्लोकात् प्राक् पठित ।

(ग) यजत इति पाठ सङ्गत । सदापृणो यजताविति ग० ।

(घ) प्रतिप्रभ इति सर्वानुक्रमण्यां ।

प्र श्यावाश्व(५२) उपक्रम्य दशसूक्तेष्वतः परम् ।
श्यावाश्वो मरुतां स्तोता मुनिरित्यवगम्यताम् ॥२६॥
ऋतेन ऋत(६२)मित्यस्य सूक्तेऽयं(क) श्रुतविन्मुनिः ।
ऋतस्य गोपा(६३)वित्यस्मिन् वरुणं व (६४) इतीह च ॥२७॥
अर्चनाना ऋषिर्विद्याद्यश्चिकेते(६५)ति सूक्तयोः ।
रातहव्योऽथ यजतो बळित्थेति(६७) च सूक्तयोः ॥२८॥
उरुचक्रिर्बाहुवृक्तः पौरश्चैव द्वयोर्द्वयोः ।
प्रतिप्रियतमं(७५) सूक्तमवस्युर्दृष्टवान्मुनिः ॥२९॥
अत्रिरेव मुनिर्भौम आभात्यग्नि(७६)रिति द्वयोः ।
अश्विनावेह(७८) सूक्तस्य सप्तवध्रिस्त्वृषिः स्मृतः ॥३०॥
सत्यश्रवा ऋषिर्नाम महे नो अद्य(७९)सूक्तयोः ।
युञ्जते मन(८१) इत्यत्र श्यावाश्वः सूक्तयोर्ऋषिः ॥३१॥
अत्रिरच्छा वदे(८३)(ख)त्यादिचतुःसूक्तेष्वृषिः स्वयम् ।
मण्डलान्त्यस्य सूक्तस्य प्र व(८७) इत्येवयामरुत् ॥३२॥

इति पञ्चमं मण्डलम् ।

---

(क) चेति च० ।

(ख) मोक्षमूलरसम्पादित ऋग्वेदे सर्वानुक्रमण्यां च अच्छ वदेति पाठो वर्त्तते ।

# अथ षष्ठं मण्डलम्।

त्वं ह्यग्न इत्युपक्रम्य षष्ठाख्यं मण्डलं प्रति।
बार्हस्पत्यो भरद्वाज ऋषिरित्यवगम्यताम् ॥ १ ॥
तत्राप्यन्ये भरद्वाजाद्दृश्यन्ते येऽपवादतः।
तेषामनुक्रमोत्रास्तु विज्ञेयास्तत्सुता इति ॥ २ ॥
इममू षु (१५) इत्यस्य सूक्तस्याङ्गिरसः सुतः।
वीतहव्यो विकल्पेन मुनिरित्यवगम्यताम् ॥ ३ ॥
अभूरेक(३१)स्तपूर्व्य(३२)ति सुहोत्रः सूक्तयोर्ऋषिः।
शुनहोत्रो य ओजिष्ठ:(३३) सञ्च त्वे(३४) चेति सूक्तयोः ॥ ४ ॥
कदा(३५) सत्रा मदास(३६)स्तु सूक्तयोरनयोर्नरः।
ऋषिर्यो रयिव(४४)स्त्वादिसूक्तानां त्रितयं प्रति ॥ ५ ॥
यज्ञा यज्ञीय(४८)सूक्ते च शंयुः पुत्रो बृहस्पतेः।
स्वादुष्किलाय(४७)मित्यस्य गर्गो नाम ऋषिः स्मृतः ॥ ६ ॥
स्तुषे जन(४९)मुपक्रम्य चतुःसूक्तेष्वयं मुनिः।
ऋजिश्वा ये सुहोत्राद्याः पौत्राश्चैते बृहस्पतेः ॥ ७ ॥
जीमूत(७५)सूक्ते पायुस्तु भारद्वाज ऋषिः स्मृतः।
उक्तापवादविषयादितरत्रात्र मण्डले।
स्वयमेव भरद्वाज एवं सर्वत्र गम्यताम् ॥ ८ ॥

इति षष्ठं मण्डलम्।

## अथ सप्तमं मण्डलम् ।

---

अग्निं नर इति त्वेतत्सप्तमं मण्डलं मति ।
ऋषिर्वसिष्ठो विज्ञेयो मित्रावरुणयोः सुतः ॥ १ ॥
इन्द्र क्रतुं न (३२,२६) इत्यस्मिन्नृचौ मो षु (३२) सूक्तके ।
वसिष्ठपुत्रः शक्तिर्वा वसिष्ठो वा स्वयं मुनिः ॥ २ ॥
श्वित्यञ्च(३३) इति सूक्तस्य नवानामादितस्तृचां ।
वसिष्ठ एव पश्चानां विद्युतो ज्योति(३३,१०)रित्यृचाम् ॥ ३ ॥
वसिष्ठपुत्रा इन्द्रो वा ऋषिरित्यवगम्यताम् ।
तिस्रो वाच(१०१) इति त्वस्मिन् पर्जन्याये(१०२)ति चोत्तरे ।
अग्निपुत्रः कुमारो वा वसिष्ठो वा स्वयं मुनिः ॥ ४ ॥

इति सप्तमं मण्डलम् ।

---

# अथाष्टमं मण्डलम् ।

मा चिदन्यदिति(१)त्वेतदष्टमं मण्डलं प्रति ।
प्रगाथाद्यृषयो ज्ञेयाः शृणु वक्ष्यामि तानिह ॥ १ ॥
अनुक्तगोत्रो यस्त्वत्र मण्डले लक्ष्यते मुनिः ।
स तु काण्व इति ज्ञेयः प्राङ्मत्स्यात्सांमदादृषेः ॥ २ ॥
मण्डलाद्यद्वृचस्यायं प्रगाथो घोरजो मुनिः ।
स हि घोरस्य कण्वस्य भ्राता सन् पुत्रतां गतः ॥ ३ ॥
मेधातिथिः परस्तस्मात्स मेध्यातिथिना सह ।
यच्चिद्धि त्वे(१,२)त्यृचामासामृषिराद्यप्रविंशतेः ॥ ४ ॥
स्तुहि स्तुही(१,३०)त्याद्यानामृचां चतसृणामृषिः ।
प्रयोग(क)पुत्र आसङ्गस्तस्य पत्नी तु शश्वती ॥ ५ ॥
अन्वस्य स्थूर(१,३४)मित्यस्याः सा च त्वङ्गिरसः सुता ।
मेधातिथिप्रियमेधावृषी सूक्ते इदं वसो(२) ॥ ६ ॥
आङ्गिरसः प्रियमेधस्तत्र मेधातिथिर्मुनिः ।
भिन्धा वि भिन्दो(ख)(२,४१) इत्यस्य द्वृचस्याप्यस्य केवलम् ॥ ७ ॥
पिबा सुतस्य(३)(ग) सूक्तस्य मेधातिथिर्ऋषिः स्मृतः ।
यदिन्द्र प्रागपाक्(४) सूक्ते देवातिथिर्मुनिः स्मृतः ॥ ८ ॥

---

(क) प्रयोग इति सर्वानुक्रमण्यो ।

(ख) मोक्षमूलरसम्पादित ऋग्वेदे भिन्धि वि भिन्दो इति पाठोऽस्ति ।

(ग) मोक्षमूलरसम्पादित ऋग्वेदे सर्वानुक्रमण्यां च पिब सुतस्येति पाठो वर्त्तते ।

दूरादिहेव(१) सूक्तस्य ऋषिर्मेध्यातिथिस्ततः[क] ।
महानिन्द्रो य(२)इत्यस्मिन् वत्सो नाम ऋषिः स्तुतः ॥ ८ ॥
प्र यद्वस्त्रिष्टुभं(७) सूक्ते पुनर्वत्स ऋषिः स्तुतः ।
आ नो विश्वाभि(८)रित्यस्मिन् सध्वंसो नाम संस्तुतः ॥१०॥
आ नूनमश्विने(९)त्यस्मिञ्छशकर्णं ऋषिः स्तुतः ।
यास्स(१०) इत्यस्य सूक्तस्य प्रगाथो नाम संस्तुतः ॥११॥
त्वमग्ने व्रतपाः(११) सूक्ते वत्स एव मुनिः स्तुतः ।
ऋषिर्य इन्द्र(१२) सूक्तस्य पर्वतो नाम संस्तुतः ॥१२॥
इन्द्रः सुतेषु(१३) सूक्तस्य नारदो मुनिरेव सः ।
यदिन्द्राह(१४)मिति त्वमिंद्रमू(१५)मित्युत्तरेऽपि च ॥१३॥
गोषूक्ती चाश्वसूक्ती च ऋषी एतौ काण्वायनौ ।
प्र सम्राज(१६)मिति त्रीणि सूक्तानीरिम्बिठिर्जगौ ॥१४॥
तं गूर्धये(१८)ति चत्वारि ऋषिः सूक्तानि सोभरिः ।
ईळिष्व ही(१९)त्युपक्रम्य चतुःसूक्तेष्वतः परम् ॥१५॥
ऋषिर्विश्वमना नाम स वैयश्व इतिः स्तुतः ।
एषां चतुर्थे सूक्ते तु व्यश्वो वाङ्गिरसो मुनिः ॥१६॥
अग्निरुक्थे(२७) उपक्रम्य पञ्चसूक्तेष्वतः परम् ।
मनुर्वैवस्वतो नाम ऋषिरित्यवगम्यताम् ।
एषां तु मध्यमे सूक्ते मारीचो वाथ कश्यपः ॥१७॥
मेधातिथिस्तु प्रकृतानि(२२) सूक्तं
मेध्यातिथिस्तत्र वयम्(२३)सूक्तम् ।

(क) स्तुत इति अ० ।

नीपातिथिः सूक्तमथेन्द्र याहि(२४)
द्वचं तथान्त्यं वसुरोचिषस्य ॥१८॥
मद्वत्समेतेऽङ्गिरसो ह्यपश्यं-
स्ततोऽग्निनेन्द्रेण(२५) ततोऽविते(२६)ति ।
चतुर्षु सूक्तेष्वत उत्तरेषु
श्यावाश्वनामा मुनिरर्चिगोत्रः ॥१९॥
अग्निमस्तोषि(२८)सूक्तेषु नाभाकोऽथ चतुर्ष्वृषिः ।
एषां चतुर्थे सूक्ते वा तस्य चान्त्ये तृचेऽथवा ॥२०॥
आत्रेयस्त्वर्चनाना वा मुनिरित्यवगम्यताम् ।
इमे विप्रस्य(४२) सूक्तेऽस्मिन् समिधाग्नि(४४)मितीह च॥२१॥
विरूपोऽङ्गिरसः पुत्रस्त्रिश्लोकस्तत उत्तरे ।
सूक्ते त्वावत(४६) इत्यस्मिन्नश्वपुत्र ऋषिर्वशः ॥२२॥
महि वो महता(४७) सूक्ते त्वाप्त्यस्त्रित ऋषिः स्मृतः ।
स्वादोरभक्षि(४८)सूक्तस्य प्रगाथाख्य ऋषिः स्मृतः[क] ॥२३॥

---

(क) अत ऊर्ध्वं, एकादश सूक्तानि मोक्षमूलरसम्पादितऋग्वेदे समुपलभ्यन्ते। तानि तु सायणेन न व्याख्यातानि। अत्रापि च तेषां न ऋषिनिरूपणमस्ति। किन्तु सर्वानुक्रमण्यां तत्र तत्र ऋष्युल्लेखो दृश्यते। यथा, अभि प्र(४९) दश प्रस्कण्वस्य ****। पञ्चमृतं(५०) पुष्टिगुः। यथा मनौ (५१) श्रुष्टिगुः। यथा मनौ (५२) आयुः। उपमं त्वा(५३)ष्टौ मेध्यः। एतत्ते (५४) मातरिश्वा **। भूरीत् (५५) पञ्च कृशः ****। प्रति ते (५६) पृषध्रः ****। युवं देवा (५७)
. .... . . . .... .
. . . . .

क्रमशिक्षाविवरणे तु सूक्तानामेषामृषिनिरूपणमुपलभ्यते।

अथ आयाहि(६०) सूक्तस्य तथा तस्योत्तरस्य च ।
भर्गः प्रगाथपुत्रोऽयमृषिरित्यवगम्यताम् ॥२४॥
प्रगाथ एव प्रो अस्मै(६२) सूक्तेष्वेषु चतुर्ष्वृषिः ।
तरोभि(६६)रितिसूक्तस्य प्रगाथतनयः कलिः ॥२५॥

सूक्ते त्विह त्यान्न्वि(६७)ति सांमदो वा
मत्स्यो मुनिर्मत्स्यचारिणो वा ।
जालेन नद्धा(क) बहवो हि मत्स्या
मान्योऽथ मैत्रावरुणिः स्वयं वा ॥२६॥

आ त्वा रथ(६८)मिति त्वस्य प्र प्र वस्त्रिष्टुभस्य(६९)(ख) च ।
आङ्गिरसः प्रियमेध ऋषिरित्यवगम्यताम् ॥२७॥
यो राजे(७०)ति च सूक्तस्य त्वं न(७१) इत्युत्तरस्य च ।
आङ्गिरसः पुरुहन्मा मुनिरत्र यदुत्तरम् ॥२८॥
तत्र त्वन्यतरोऽयं वा सुदीतिपुरुमीळ्हयोः ।
हविष्कृणुध्व(७२)मित्यस्मिन् प्रागाथो हर्यतो मुनिः ॥२९॥
उदीराथा(७३)मिति त्वस्य तथा तस्योत्तरस्य च ।
आत्रेयोऽयं गोपवन ऋषिरित्यवगम्यताम् ॥३०॥
आत्रेयः सप्तवध्रिर्वा तयोः पूर्वस्य गम्यताम् ।
ऋषिर्युक्ष्वा हि(ग)(७५) सूक्तस्य विरूपो वाङ्गिरसः सुतः ॥३१॥
इमं नु(७६) सूक्तमारभ्य त्रिषु सूक्तेष्वतः परम् ।

---

(क) नद्धा इति म० ।
(ख) मोक्षमूलरसम्पादितऋग्वेदे त्रिष्टुभमिति पाठो वर्त्तते ।
(ग) मोक्षमूलरसम्पादितऋग्वेदे युक्ष्वा हीति पाठो वर्त्तते ।

काण्वः कुरुसुतिर्नाम ऋषिरित्यवगम्यताम् ॥२२॥
अयं क्रतु(७९)रिति तस्मिन् क्रतुर्नाम भृगोः सुतः ।
न ह्यन्य(८०)मिति सूक्तेऽस्मिन्नेकद्यूर्नौधसो मुनिः(क) ॥२३॥
आ तू न(ख)(८१) इत्युपक्रम्य त्रिषु सूक्तेष्वतः परम् ।
कुसीदी नाम काण्वोऽयमृषिरित्यवगम्यताम् ॥२४॥
प्रेष्ठं व(८४) इति(ग) सूक्तस्य काव्योऽयमुशना मुनिः ।
आ ने हव(८५)मुपक्रम्य त्रिषु सूक्तेष्वतः परम् ॥२५॥
आङ्गिरसः कृष्णनामा मुनिरित्यवगम्यताम् ।
एषान्तु मध्यमे सूक्ते कार्ष्णिर्वा विश्वको मुनिः ॥२६॥
उत्तरे च (घ)वसिष्ठस्य पुत्रो वा द्युम्निको(ङ) मुनिः ।
प्रियमेधो वाङ्गिरस ऋषिरित्यवगम्यताम् ॥२७॥
तम्वोदस्म(च)(८८) सूक्तस्य नोधा नाम स गौतमः ।
त्वष्टदिन्द्राय(८९) सूक्तस्य ऋषी तस्योत्तरस्य च ॥२८॥
नृमेधः पुरुमेधश्च सहैतावङ्गिरःसुतौ ।
अपाला नाम कन्ये(९१)ति सूक्तस्यात्रेः सुता मुनिः ॥२९॥
श्रुतकक्षः सुकक्षश्च तावप्याङ्गिरसः सुतौ ।

---

(क) नाम नौधसः इति ख० ।
(ख) मोक्षमूलरसम्पादितऋग्वेदे आ तु न इति पाठो दृश्यते ।
(ग) प्रेष्ठं वोऽतिथीति ख० ग० ।
(घ) उत्तरमेवेति ग० ।
(ङ) द्युम्नीक इति सर्व्वानुक्रमणी ।
(च) मोक्षमूलरसम्पादितऋग्वेदे सर्व्वानुक्रमण्यामनुक्रमणिकाविवरणे च तम्वोदस्ममिति पाठो वर्त्तते ।

यान्तमा व(९२) इति तस्य तान्वो श्रवगम्यताम् ॥४०॥
यद्वेदभी(९०)ति सूक्तस्य सुकचः स्वयमेव तु।
गौर्धयती(९४)ति सूक्तस्य विन्दुरङ्गिरसः सुतः।
पूतदचोऽथवा ज्ञेयः सोऽपि चाङ्गिरसः सुतः ॥४१॥
आ ते(९५)ति सूक्ते तत उत्तरे च
तिरश्चिनामा(क)ङ्गिरसस्तनूजः।
तयोत्तरे मारुतिवा द्युतानो
देवसुतः काश्यप उत्तरस्य ॥४२॥
इन्द्राय साम(९८) सूक्तस्य तथा तस्योत्तरस्य च।
नृमेधनामाङ्गिरस ऋषिरित्यवगम्यताम् ॥४३॥
अयन्त एमि(१००) सूक्तस्य नेमो नाम भृगोः सुतः।
अयमस्मि(१००,४) इत्ये तस्मिन्निन्द्र एव ऋषिः स्मृतः ॥४४॥
अधगित्ये(१०१)ति सूक्तस्य जमदग्निः स भार्गवः।
त्वमग्न(१०२) इति सूक्तस्य प्रयोगो नाम भार्गवः ॥४५॥
अथवा इहस्पत्यः पावकोऽग्निर्मुनिः स्मृतः।
गृहपतियविष्ठाख्यावग्नी वा सहसः सुतौ ॥४६॥
तयोरन्यतरो वाम्योर्वर्षिरित्यवगम्यताम्।
ऋषिस्तदर्शि(१०३) सूक्तस्य सोभरिर्नाम काण्वः ॥४७॥

इत्यष्टमं मण्डलम्।

---

(क) तिरश्चो नामेति सर्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च।

# अथ नवमं मण्डलम् ।

स्वादिष्ठये(१)त्युपक्रम्य नवमं मण्डलं प्रति ।
पावमान्यस्तु विज्ञेया ऋषयः सौमिकाश्च ते[क] ॥ १ ॥
मण्डलाद्यस्य सूक्तस्य मधुच्छन्दा ऋषिः स्मृतः ।
पवस्व देववीः(२) सूक्ते मेधातिथिरिति स्मृतः ॥ २ ॥
एष देव(३) इति त्वस्य शुनःशेपो मुनिः स्मृतः ।
सना च सोम(४)[ख] सूक्तस्य हिरण्यस्तूप ऋषिः स्मृतः ॥ ३ ॥
एतेषामनुक्रमोच्चत्वाद्दोषोक्तिर्न कृता मया ।
समिद्ध(५) इत्युपक्रम्य सूक्तानां विंशतिं प्रति ॥ ४ ॥
असितो वा देवलो वा ऋषिरेतौ तु काश्यपौ ।
ऋषिः पवस्व(२५) सूक्तेऽस्मिन्नागस्त्यः स दृढच्युतः ॥ ५ ॥
दृढच्युतस्य पुत्रोऽयमिध्मवाहस्तदुत्तरे ।
एष कवि(२७)रेष वाजी(२८) सूक्तयोरनयोः क्रमात् ॥ ६ ॥
नृमेधः प्रियमेधश्च मुनिराङ्गिरसाविमौ ।

---

(क) सर्व्वानुक्रमणीवेदार्थदीपिकाजगन्नाथकृतानुक्रमणिकाविवरणेषु नवममण्डलस्य सोमदेवताकत्वकीर्त्तनमस्ति। अत्र तु नवममण्डले सौमिकानामृषित्वं दृश्यते। अत्र शौनक एव प्रमाणम्। अथवा सोमो देवता एषामिति व्युत्पत्त्या ऋषयोऽपि सौमिका इति व्यपदिश्यन्ते। अधिकेन व्यपदेशा भवन्तीति न्यायात्।

(ख) मोक्षमूलरसम्पादितऋग्वेदे सर्व्वानुक्रमण्याञ्च सन च सोमेति पाठो वर्त्तते ।

प्रास्य(२९) प्र धारा अस्ये(३०)ति सूक्तयोरनयोः क्रमात् ॥७॥
नृमेधश्चाथ विन्दुश्च मुनिरङ्गिरसः सुतः ।
प्र सोमास (३१) प्र सोमास (३२) सूक्तयोरनयोः क्रमात ॥८॥
राहूगणो गौतमोऽयं श्यावाश्वश्चात्रिगोत्रजः ।
प्र सोमास(३३) उपक्रम्य द्वयोराद्यस्थितो मुनिः ॥९॥
द्वयोर्द्वयोरुत्तरयोर्द्वयोऽङ्गिरसः सुता ।
प्रभूवसुरङ्गणो बृहन्मतिरिमे त्रयः ॥१०॥
प्र ये गाव(३१) उपक्रम्य त्रिषु सूक्तेष्वतः परम् ।
मेध्यातिथिः स्वयं काण्व ऋषिरित्यवगम्यताम् ॥११॥
त्रिष्वेवाङ्गिरसोऽयास्य प्र ण(३४) इत्युत्तरेष्वपि ।
कविस्तु भार्गवः सूक्तेष्वया सोम(३०) इति त्रिषु ॥१२॥
उचथ्यस्त्रिषु सूक्तेषूत्त(४०) इत्यङ्गिरसः सुतः ।
पुनानो(३७) सूक्तमुपक्रम्य सूक्तानामष्टकं प्रति ॥१३॥
काश्यपोऽयमवत्सार ऋषिरित्यवगम्यताम् ।
अया वीती(५१)ति सूक्ते चामहीयुरङ्गिरः सुतः ॥१४॥
एते असृग्र(६२)मित्यस्मिन् जमदग्निर्भृगोः सुतः ।
आ पवस्वे(६७)ति सूक्तेऽस्मिन्निध्रुविः काश्यपो मुनिः ॥
इपा सोमे(६४)ति सूक्तेऽस्मिन् मारीचः काश्यपो मुनिः ॥१५॥
पवमानि(६५)सूक्तं जमदग्निरथापि
स्याद् भृगुर्वा वरुणस्य पुत्रः ।
अग्निर्भृगोर्नाम तु पवस्व(६६)सूक्तं
वैखानसा नाम शतं विदुस्ते ॥१६॥

त्वं सोम(१०)सूक्ते षट्चास्तृचेषु
मुख्येषु सप्तर्षयः प्रसिद्धाः ।
भरद्वाजः कश्यपो गोतमोऽत्रि-
र्विश्वामित्रो जमदग्निर्वसिष्ठः ॥१७॥

उत्तराणां तु शिष्टानामृचामङ्गिरसः सुतः ।
पवित्रो वा वसिष्ठो वा ह्युभौ वा तावृषी सह ॥१८॥

॥ देव(१८)मिति वत्सप्रिः(क) सूक्तं भालन्दनो जगौ ।
इषुः(९९) सूक्तं त्वाङ्गिरसो त्रिरश्मन्रूप उत्तरम् ॥१९॥

त्रिरस्मा(७०) इति सूक्तेऽस्मिंस्तत्र वा दक्षिणो(७१)त्तरे ।
रेणुः पूर्व्वोऽथ ऋषभो वैश्वामित्रौ च तावृषी ॥२०॥

हरिं मृजन्ति(७२) सूक्तस्य सके द्रष्टार(७३) च क्रमात् ।
हरिमन्तः पवित्रश्च मुनिरङ्गिरसः सुतः ॥२१॥

शिशुर्न(७४) सूक्ते कक्षीवान्मुनिर्दीर्घतमःसुतः(ख) ।
अभि प्रियाण्(७५)पक्रम्य पञ्चसूक्तेष्वतः परम् ॥२२॥

कविर्नाम भृगोः पुत्र ऋषिरित्यवगम्यताम् ।
सोमस्य धारे(८०)त्यादीनां सूक्तानां त्रितयं प्रति ॥२३॥

भारद्वाजो वसुर्नाम मुनिरित्यवगम्यताम् ।
पवित्र(८३)मिति सूक्तस्य पवित्रोऽङ्गिरसः सुतः ॥२४॥

ऋषिः पवस्व(८४) सूक्तस्य वाच्यो नाम प्रजापतिः ।
इन्द्राय सोम(८५) सूक्तस्य वेनो नाम स भार्गवः ॥२५॥

---

(क) वत्सप्रीरिति सर्व्वानुक्रमणी ।
(ख) दीर्घतमः सुत इति प० पु० । कक्षीवानौशिज इत्यनुक्रमणिकाविवरणम् ।

परीत(१०७) इति सूक्तेऽस्मिन् भारद्वाजादयो[क] विदुः ।
एते तु सप्त ऋषयः सगोत्राः परिकीर्तिताः ॥ ४१ ॥
पवस्वे(१०८)त्युत्तरं सूक्तं यस्यैते त्वृषयो विदुः ।
तस्य त्वाद्ये द्वचे गाक्षो गौरिवीतिस्त्वृषिः स्मृतः ॥ ४२ ॥
तृतीयाया ऋचः शक्तिर्वामिष्ठोऽन्ये ढचेऽपि च ।
अथ द्वचानां शिष्टानामूरुराङ्गिरसो मुनिः ॥ ४४ ॥
भारद्वाज[ख] ऋजिश्वा च तथैवाङ्गिरसौ नृपाः ।
ऊर्ध्वसद्मा कृतयशा ऋणञ्चय इति त्रयः ॥ ४५ ॥
धिष्ण्याग्नयः[ग] परि प्रे(१०९)ति सूक्तमैश्वरयो विदुः ।
पर्य्यूषु प्रे(११०)ति सूक्तस्य त्रिष्टप्पुरुकुत्सजौ ॥ ४६ ॥
त्र्यरुणस्त्रसदस्युश्च मुनिरित्यवगम्यताम् ।
अया रुचे(१११)ति सूक्तस्य पारुच्छेपिरनानतः ॥ ४७ ॥
नानान(११२)मिति सूक्तस्य शिशुराङ्गिरसो मुनिः ।
शर्य्यणावति(११३)सूक्तस्य य इन्दो(११४)रुत्तरस्य च ॥ ४८ ॥
मारीचः कश्यपो नाम ऋषिरित्यवगम्यताम् ।

इति नवमं मण्डलम् ।

---

(क) भरद्वाजकश्यपगोतमात्रिविश्वामित्रजमदग्निवसिष्ठा इति षड्गुरु-शिष्यविवरणं वेदार्थदीपिका च ।

(ख) भारद्वाजा इति ष० ।

(ग) धिष्ण्यानैय इति ष० च० ।

## अथ दशमं मण्डलम् ।

अग्ने वृहन्निति(१)त्येतद्दशमं मण्डलं पुनि ।
क्षुद्रसूक्ता महासूक्ता विज्ञेया ऋषयस्त्विति ॥१॥
मण्डलादिमुपक्रम्य सप्तसूक्तेष्वतः परं ।
आप्त्यस्त्रितो मुनिस्त्वाष्ट्रस्त्रिशिराः सूक्तयोर्द्वयोः ॥२॥
प्रकेतुने(८)ति तत्रापि यत्सूक्तस्वरमन्त्रयोः ।
अम्बरीषसुतस्तत्र सिन्धुद्वीपोऽथवा मुनिः ॥३॥
ओ चि(१०)त्सूक्तेष्वयुक्षु षष्ठ्या सह मुनिर्यमी ।
वैवस्वतो यमो नाम नवम्या सह युक्षु तु ॥४॥
वृषा(११)द्यावा(१२)युजे(१३)त्येषां सूक्तानां त्रितयं प्रति ।
आङ्गि[क]र्नाम हविर्धानो मुनिरित्यवगम्यताम् ॥५॥
एतेषामुत्तरे सूक्ते विवस्वानदितेः सुतः ।
परेयिवांस(१४)सूक्तस्य यमो वैवस्वतो मुनिः ॥६॥
उदीरतामुपक्रम्य पञ्चसूक्तान्यतः परम् ।
यमपुत्रा विदुस्तेषामु(१५)च्छङ्खो दमनस्तु मा(१६) ॥७॥
एको देवश्रवास्त्वष्टा(१७)परः सङ्कुसुकः परम्(१८) ।
मथितस्तु नि वर्तध्व(१९) मस्मिन् सूक्ते मुनिः पुनः ॥८॥
भृगुर्वा वारुणिर्विद्याद्भार्गवश्च्यवनोऽथवा ।
भद्र(२०)मित्यादिसूक्तानां सप्तानां विमदो मुनिः ॥९॥

---

(क) आङ्गिरित्यत्र आङ्गिरस इति अनुक्रमणिकाविवरणम् ।

प्राजापत्यः स ऐन्द्रो वा वसुक्रद्वा वसुक्रजः ।
ऋषिर्वसुक्र ऐन्द्रीयस्त्रिषु सूक्तेष्वसत्स्वि(२७)ति ॥१०॥
तन्मध्यसूक्ते विश्वो ह्य(२८) प्रथमाया ऋचो मुनिः ।
इन्द्रस्नुषा वसुक्रस्य पत्न्येवेन्द्रो युजान्तृचाम् ॥११॥
चतुर्थ्यां सप्त शिष्टानां वसुक्रस्तयुजान्तृचाम् ।
प्र देवत्रे(३०)ति सूक्तानां पञ्चानां कवषो मुनिः ॥१२॥
ऐलूषो मौजवान् वाचः प्रावेपा मे(३४)ति चोत्तरे ।
लुशो मुनिः स धानाकस्त्वबुध्र(३५)मितिसूक्तयोः ॥१३॥
नमो मित्रस्य(३७) सूक्तस्य सूर्य्यजोऽभितपा मुनिः ।
अस्मिन्न(३८)इति सूक्तस्य ऋषिरैन्द्र(क)स्तु मुष्कवान् ॥१४॥
यो वां परिज्मा(३९)सूक्तस्य रथ(४०)मित्युत्तरस्य च ।
कक्षीवतः सुता घोषा ऋषिकेत्यत्र कीर्त्तिता ॥१५॥
समानमु त्यं(४१)(ख) घौषेय' सुहस्त्यो नाम वा ऋषिः ।
अस्तेवे(४२)ति त्रिसूक्तानां कृष्ण आङ्गिरसो मुनिः ॥१६॥
दिवस्परि(४५)प्र वोते(४६)ति सूक्तयोरनयोस्त्वृषिः ।
भालन्दनस्तु वत्सप्रि(ग)र्जगृभ्मे(४७)त्युत्तरस्य [illegible] ॥१७॥
सप्तगुर्नाम विज्ञेयो मुनिराङ्गिरसः सुत' ।
अहम्भुव(४८) मुपक्रम्य सूक्तानां त्रितयं प्रति ॥१८॥

---

(क) इन्द्र इति सर्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च ।

(ख) समानमु त्ये इति घ० च० स० ।

(ग) वत्सप्रीरिति सर्वानुक्रमणी । वत्सः प्रिय इति अनुक्रमणिकाविवरणम् ।

अनयोरुत्तरे सूक्ते लौक्यो (क)वा म हृदस्यति ॥२८॥
अदितिर्वा दक्षपुत्री मुनिरित्यवगम्यताम् ।
ऋषि शाक्तो गौरिवीतिर्जनिष्ठा(७३) इति सूक्तयो ॥२९॥
सिन्धुक्षित्प्रैयमेधो(ख)ऽय प्र सु व(७५) सूक्त उत्तरे ।
ऐरावतो जरत्कर्ण आ व ऋञ्जस(७६) उत्तरे ॥३०॥
भृगुपुत्र स्यूमरश्मिरश्वमुप(७७) इति द्वयो ।
अग्निर्वैश्वानरो वाय स सौचीकोऽग्निरेव वा ॥३१॥
अग्निर्वाजम्भरो वायमपश्य(७९)मिति सूक्तयो ।
भौवनो विश्वकर्माय य इमे(८१)त्यादिसूक्तयो ॥३२॥
ऋषिस्तु तापसो मन्युर्यस्ते मन्य(८३)विति द्वयो ।
सत्येनोत्तभिता(८५)सूक्त सूर्यां ॥विचौत्यार्षं तत् ॥३३॥
वि ह्री(८६)ति सूक्तमिन्द्राण्या इन्द्रस्य च वृषाकपे ।
वि हि सोतो (८६,१) (ग)कि सुबाह(८६,८) विन्द्राणी (८६,११)
नाह(८६,१२)मित्यृचां ॥३४॥
अयमेमी(८६,१९)ति चारभ्य तथा चतसृणामृचाम् ।
उक्ष्णो ही(८६,१४)त्यनया साकं नवानामिन्द्र एव दृक् ॥३५॥
एवं क्षम सम्राभिके(८६,७) वृषाकपायि रेवति(८६,१३) ।
पर्शुर्ह(८६,२३)ति तिसृणां च ऋषिरैन्द्रो वृषाकपि ॥३६॥
एकादशानां शिष्टानामिन्द्राणी सा पुलोमजा ।

(क) श्रौत्य इति सर्वानुक्रमणी ।
(ख) प्रियमेध इति अनुक्रमणिकाविवरणम् ।
(ग) वि हि सोतो(८६,१)रित्यादिकतिपयमन्त्राणां सर्वानुक्रमण्यनुक्रमणि-
काविवरणयोर्न दृश्यते । तदार्षदीपिका तु यथायथमाह स्म ।

पायूरक्षोहणे(८७)(क) सूक्ते भरद्वाजसुतो मुनिः ॥३७॥
हविष्यान्तस्य(८८)(ख) सूक्तस्य मूर्द्धन्वान्नाम दर्शितः(ग) ।
अयन्त्वङ्गिरसः पुत्रो वामदेव्योऽथवा पुनः ॥३८॥
विश्वामित्रसुतो रेणुः सूक्तस्येन्द्रं स्तवे(८९)त्यृषिः ।
सहस्रशीर्षा(९०) सूक्तस्य ऋषिर्नारायणः स्मृतः ॥३९॥
सञ्जागृवद्भि(९१)रित्यस्मिन् वैतहव्योऽरुणो मुनिः ।
यमस्ये(९२)त्यस्य सूक्तस्य शार्य्यातो नाम मानवः ॥४०॥
महि द्यावे(९३)ति सूक्तस्य पार्थ्य(घ)स्तान्व ऋषिः स्मृतः ।
प्रैते(९४) सूक्तस्य सर्पोऽयं काद्रवेयोऽर्बुदो मुनिः ॥४१॥
उर्वशी च हये(९५) सूक्ते मुनिरैलः पुरूरवाः ।
ऐलस्य वाक्यमेताः प्रथमाथ चतुर्दशी ॥४२॥
तृतीया द्वादशी षष्ठी सप्तदश्या अष्टेति षट् ।
सचा य(९५,८)दिति तिस्रश्च उर्वश्या उत्तरा नव ॥४३॥
प्र ते महे(९६) इति तस्य वरुरङ्गिरसः सुतः ।
ऐन्द्रः सर्वहरिर्वायमृषिरित्यवगम्यताम् ॥४४॥
या ओषधी(९७)(ङ)स्तु सूक्तस्य ऋषिराथर्वणो भिषक् ।
आर्ष्टिषेणस्तु देवापिर्मुनिः सूक्ते बृहस्पते(९८) ॥४५॥

---

(क) मोक्षमूलरसम्पादितऋग्वेदे सर्वानुक्रमण्यामनुक्रमणिकाविवरणे च रक्षोघ्नमिति पाठो वर्त्तते ।
(ख) मोक्षमूलरसम्पादितऋग्वेदे हविष्यान्तमिति पाठोऽस्ति ।
(ग) दर्शक इति पाठः सम्भवितुमर्हति ।
(घ) पार्थ इति सर्वानुक्रमणी ।
(ङ) ओषधीरिति स० अ० ।

भरद्वाजसुता रात्रिरथवा गम्यतामृषिः ।
समाप्त(१२८) इति सूक्तस्य विहव्योऽङ्गिरस सुतः ॥६४॥
नास(१२९)त्सूक्ते मुनिर्ज्ञेय परमेष्ठी प्रजापतिः ।
यो यज्ञ(१३०) सूक्ते(क) यज्ञस्तु प्राजापत्य ऋषिः स्मृत ॥६५॥
काक्षीवत सुकीर्तिस्तु सूक्तेऽप आप(१३१) उत्तरे ।
ईजान(१३२) सूक्ते मार्मेध शकपूत ऋषिः स्मृत ॥६६॥
प्रो ष्वस्मा(१३३) इति सूक्तस्य सुदाः पैजवनो मुनिः ।
यौवनाश्वस्तु मान्धाता सूक्तस्योभे य(१३४)दित्यृषिः ॥६७॥
इद्दोऽसमामपाद्धर्चा(१३४,७) गोधा नारी इदर्शं च ।
यस्मिन्(१३५) सूक्ते कुमारोऽयस्तपियामायन स्वयम् ॥६८॥
मुनयो वातरशना एकशो सप्त केशिन (१३६)।
जूतिश्च वातजूतिश्च विप्रजूतिर्वृषाणकः ॥६९॥
करिक्रतैतशो च दात्त्यश्चृङ्गश्च सप्तम ।
उत(१३७) सूक्ते सप्तर्षय(ख) एकशो एव ते विदु ॥७०॥
तव त्य(१३८) इति सूक्तस्य अङ्गस्त्वृविहरो सुत ।
विश्वावसु सूर्य(१३९) सूक्ते मुनिर्गन्धर्व एव स ॥७१॥
अग्ने तवे(१४०)ति सूक्तस्य मुनिरग्निस्तु पावक ।
अग्ने अच्छे(१४१)ति सूक्तस्य मुनिरग्निस्तु तापस ॥७२॥
अय(१४२) सूक्ते द्रुणा शाङ्गा जरिता द्रोण उत्तर ।
सारिसृक्व स्तम्बमित्रश्च एते पक्षिणो विदु ॥७३॥

(क) यो यज्ञपदे इति प० प० अ० ।
(ख) महाभारते शान्ति २६६ श्लोकेऽप्यन्यथा ।

त्यं चि(१४३)त्सूक्तस्य साङ्ख्योऽत्रिरय(१४४)मित्युत्तरस्य तु ।
तार्क्ष्यपुत्रः सुपर्णो वा मुनिर्यामायनोऽथवा ॥७४॥
स ऊर्ध्वकृशनो ज्ञेय इन्द्राणीमां खनाम्यृ(१४५)षिः ।
ऐरम्मदो देवमुनिररण्यानी(१४६)त्यृषिः स्मृतः ॥७५॥
सुवेदा नाम शैरीषिः(क) श्रत्ते(१४७) सूक्ते मुनिः स्मृतः ।
सुष्वाणास(१४८)स्तु सूक्तस्य वैन्यो नाम पृथुर्मुनिः ॥७६॥
सविता(१४९) सूक्तस्य चार्षन्(ख) हैरण्यस्तूप एव सः ।
मृळीको नाम वासिष्ठः समिद्धश्चि(१५०)दित्यृषिः ॥७७॥
श्रद्धयाग्नि(१५१)रिति त्वस्य श्रद्धा कामायनी मुनिः ।
भरद्वाजसुतः शासः शास इत्थे(१५२)त्यृषिः स्मृतः ॥७८॥
इन्द्रस्य मातरो यास्ता ऋषयो देवजामयः ।
ईङ्खयन्ती(१५३)रिति त्वस्य सोमो(१५४) वैवस्वती यमी ॥७९॥
अरायि(१५५) सूक्तेऽस्यर्षिभारद्वाजः शिरिम्बिठिः(ग) ।
अग्निं हिन्वन्तु नः(१५६) सूक्ते केतुरग्निसुतो मुनि ॥८०॥
इमा नु(१५७) भुवन आप्त्यः साधनो भौवनोऽथवा ।
सूर्यो न(१५८) इति सूक्तस्य सौर्यश्चक्षुरृषिः स्मृतः ॥८१॥
उदसौ(१५९) त्वस्य पौलोमी शची नाम मुनिः स्मृतः ।
तीव्रस्य(१६०) सूक्तस्य वैश्वामित्रस्तु पूरणः ॥८२॥
प्राजापत्यस्तु मुञ्चामी(१६१)त्यथ यक्ष्मनाशनः ।

---

(क) शैरीषिरिति ध० च० अ० । अनुक्रमणिकाविरुद्धम् ।
(ख) चार्षन्त इति ध० च० अ० ।
(ग) शिरिम्बिठ इति सर्वानुक्रमणी ।

रक्षोहायन्त्वयिर्नाह्मो ब्रह्मणाग्नि(११२)रमुष्य तु ॥८२॥
अचोभ्या(११३)मिति सूक्तस्य काश्यपो विदुषा मुनि ।
प्रचेतास्तु जगौ सूक्तमपेहो(११४)त्याङ्गिर सुत ॥८४॥
देवा' कपोत (११५) सूक्तस्य कपोतो नैर्ऋतस्तुषि ।
ऋषभ मे(११६)ति सूक्तस्य वैराज ऋषभो मुनि ॥८५॥
शाक्वरो वा स ऋषभस्त्वेद(११७)मिति द्व्यूचे ।
विश्वामित्रजमदग्नी ऋषिर्गाथिनभार्गवौ ॥८६॥
वातायनो मुनि सूक्त वातस्ये(११८)त्यनिलो जगौ ।
मयोभू (११९) प्रवर सूक्त काक्षीवत ऋषिर्जगौ ॥८७॥
विभ्राड्(१७०)सूक्तमिद सौर्यो नाम्ना विभ्राडृषिर्जगौ ।
इटतो[क]) भार्गव सूक्त त्वमग्निरटतो(१७१) जगौ ॥८८॥
चौश्चुत्तराणि सूक्तानि विदुरङ्गिरसस्त्रय ।
आयाह्या(१७२)वा(१७३)भि(१७४)प्रवर्त्ता ध्रुवोऽभीवर्त्त इत्यमी ॥८९॥
प्र वो ग्रावाण(१७५) इत्यस्मिन्नूर्ध्वग्रावार्बुदिर्मुनि ।
प्र सुनव(१७६) इति त्वस्य सूनुर्नामार्भवो मुनि ।९०॥
प्राजापत्य पतङ्गोऽय पतङ्ग(१७७) सूक्तमुक्तवान् ।
अरिष्टनेमिस्तार्क्ष्योऽय जगौ सूक्त त्यमूष्वि(१७८)ति ॥९१॥
उत्तिष्ठते(१७९)ति चैकर्चा सूक्तमेतत्त्रयो विदु ।
शिबिरौशीनर पूर्वं काशिराज प्रतर्दन ।९२॥
रौहिदश्वो वसुमना इत्येत ऋषय क्रमात् ।

---

(क) इटत इत्यत्र प्रथमायास्तसिल।

गोधा घोषा विश्ववारा पालोपनिषन्निषत् ।
ब्रह्मजाया जुहूर्नाम अगस्त्यस्य स्वसादितिः ॥१००॥
इन्द्राणी चेन्द्रमाता च सरमा रोमशोर्वशी ।
लोपामुद्रा च नद्यश्च यमी नारी च शश्वती ॥१०१॥
श्रीर्लाक्षा सार्पराज्ञी वाक् श्रद्धा मेधा च दक्षिणा ।
रात्री सूर्या च सावित्री ब्रह्मवादिन्य ईरिताः ।
स गौतमो(क) वामदेवो यः खिलाम्ना ऋषो जगौ ॥१०२॥

यैर्वेदमन्त्राः सकलाः सुदृष्टा
येनार्षानुक्रमणी प्रदिष्टा ।
नमोऽस्तु तेभ्यो मुनिपुङ्गवेभ्यो
भवन्तु ते चापि मयि प्रसन्नाः ॥१०३॥

इति दशमं मण्डलम् ॥

इति शौनकाचार्यकृतार्षानुक्रमणी समाप्ता ॥

---

(क) स गोतम इति ज० ।

# अथ छन्दोऽनुक्रमणी ।

## प्रथमं मण्डलम् ।



ऋग्वेदगतसूक्तानां सूक्तस्थानामृचामपि ।
यानि छन्दांसि विद्यन्ते तानि वक्ष्यामि सम्प्रति ॥१॥
गायत्रं नव सूक्तानि मधुच्छन्दस आदितः ।
आनुष्टुभे परे ज्ञेये दशमैकादशे उभे ॥२॥
मेधातिथेस्तु सूक्तेषु गायत्रेषूत्तरे त्विति ।
पुरउष्णिक्[क] परानुष्टुप्[ख][१]त्रिस्रश्चान्त्या[ग] अनुष्टुभः ॥३॥
शुनःशेपस्य सूक्तानि गायत्राण्येव तत्र तु ।
त्रिष्टुभौ प्रथमस्याद्ये[घ] षष्ठ्याद्या[ङ]श्च तथा दश ॥४॥
उत्तमा[च] च चतुर्थस्य षोडशी[छ] चोत्तमस्य या ।
षष्ठन्तु पाङ्क्त[ज]माद्यास्तु पञ्चमे षड्[झ]नुष्टुभः ॥५॥
ऋगस्याकं त्रिभिषीना[ञ]मेषा पादनिचृन्मता ।

---

(१) सर्वानुक्रमण्यामनुक्रमणिकाविवरणे च प्रकृतस्यास्य एकविंशमन्त्र-स्यायाश्छन्दः प्रतिष्ठेत्युक्तम् ।

---

(क) सू० २३, ऋ० १९। (ख) सू० २३, ऋ० २०। (ग) सू० २३, ऋ० २२, २३, २४। (घ) सू० २४, ऋ० १, २। (ङ) सू० २४, ऋ० ६, ७, ८, ९, १०, ११, १२, १३, १४, १५। (च) सू० २७, ऋ० १३। (छ) सू० ३०, ऋ० १६। (ज) सू० २९। (झ) सू० २८, ऋ० १, २, ३, ४, ५, ६। (ञ) सू० ३०, ऋ० ११।

# अथ छन्दोऽनुक्रमणी ।

## प्रथमं मण्डलम् ।

ऋग्वेदगतसूक्तानां सूक्तस्थानामृचामपि ।
यानि छन्दांसि विद्यन्ते तानि वक्ष्यामि सम्प्रति ॥१॥
गायत्र नव सूक्तानि मधुच्छन्दस आदितः ।
आनुष्टुभे परे ज्ञेये दशमैकादशे उभे ॥२॥
मेधातिथेस्तु सूक्तेषु गायत्रेषूत्तरे स्थिति ।
पुरउष्णिक्[क] परानुष्टुप्[ख][१]तिस्रश्चान्त्या[ग] अनुष्टुभः ॥२॥
शुनःशेपस्य सूक्तानि गायत्राण्येव तत्र तु ।
त्रिष्टुभौ प्रथमस्याद्ये[घ] षष्ठ्याद्या[ङ]श्च तथा दश ॥४॥
उत्तमा[च] च चतुर्थस्य षोडशी[छ] चोत्तमस्य या ।
षष्ठन्तु पाङ्क्त[ज]माद्यास्तु पञ्चमे षड[झ]नुष्टुभः ॥५॥
ऋगस्माकं शिप्रिणीना[ञ]मेषा पादनिचृन्मता ।

---

(१) सर्व्वानुक्रमण्यामनुक्रमणिकाविवरणे च सूक्तस्यास्य एकविंशसङ्ख्याकाया ऋचश्छन्द प्रतिष्ठेत्युक्तम् ।

---

(क) सू० २२, ऋ० १९ । (ख) सू० २३, ऋ० २० । (ग) सू० २३, ऋ० २२, २३, २४ । (घ) सू० २४, ऋ० १, २ । (ङ) सू० २४, ऋ० ६, ७, ८, ९, १०, ११, १२, १३, १४, १५ । (च) सू० २७, ऋ० १३ । (छ) सू० ३०, ऋ० १६ । (ज) सू० २९ । (झ) सू० २८, ऋ० १, २, ३, ४, ५, ६ । (ञ) सू० ३०, ऋ० ११ ।

हिरण्यस्तूपसूक्तानि त्रैष्टुभान्यथ तत्र तु ॥६॥
प्रथमस्य चतुर्थस्य जागते(क) प्रथमे तयो ।
अष्टमी षोडशी चान्त्या(ख) त्रिष्टुभश्चरमे पुन ॥७॥
अन्त्या च नवमी(ग) चापि त्रिष्टुभावेव गम्यताम् ।
उत्तमे तु जगत्याद्या(घ) नवमी(ङ) जगतीनिचृत् ॥८॥
कण्वस्य प्रथम(च) सूक्त चतुर्थ(छ) पञ्चम(ज) च यत् ।
प्रस्कण्वस्य च तान्ये(झ)व प्रगाथा बार्हता तृचा ॥९॥
प्रस्कण्वस्य द्वितीय(ञ)श्च षष्ठ(ट)श्चानुष्टुभे उभे ।
चतस्रोत्तमस्यान्त्या(ठ) कण्वस्यानुष्टुबुत्तमा(ड) ॥१०॥
सर्वा गायत्र्य एवान्या कण्वप्रस्कण्वयोश्चैव ।
सव्यस्य सप्त सूक्तानि(ढ) जागतान्येव तत्र तु ॥११॥
प्रथमस्य तृतीयस्य तृचोऽन्त्य(ण)स्त्रैष्टुभ स्मृत ।
त्वमाविथा(त)सम चम(थ) तुभ्येदेते(द) च श्रेष्ठम्(ध) ॥१२॥
त्व भुव(न)स्त्रिष्टुभश्चैता चार्चनचे(प)त्यृचा सह ।

---

(क) सू० ३१, ३४ । (ख) सू० ३२, ऋ० ८, १६, १८ । (ग) सू० ३४, ऋ० ६, १२ । (घ) सू० ३५, ऋ० १ । (ङ) सू० ३५, ऋ० ९ । (च) सू० ३६ । (छ) सू० ३९ । (ज) सू० ४० । (झ) सू० ४४, ४७, ४८ । (ञ) सू० ४५ । (ट) सू० ४६ । (ठ) सू० ५०, ऋ० १०, ११, १२, १३ । (ड) सू० ४३, ऋ० ९ । (ढ) सू० ५१, ५२, ५३, ५४, ५५, ५६, ५७ । (ण) सू० ५१, ऋ० १४, १५ सू० ५३, १०, ११ । (त) सू० ५४, ऋ० ६ । (थ) सू० ५४, ऋ० ८ । (द) सू० ५७, ऋ० ९ । (ध) सू० ५४, ऋ० ११ । (न) सू० ५२, ऋ० १२ । (प) सू० ५२, ऋ० १५ ।

त्रयोदशस्व(क) गायत्रं जागतं तदनन्तरम्(ख) ।
प्रस्तारपङ्क्ती आद्यन्ते(ग) आ विद्युन्मद्भिरस्य तु ॥२०॥
त्रिष्टुभस्तु द्वितीयाद्या(घ) विराड्रूपा तु पञ्चमी(ङ) ।
षोडशं जागतं(च) स्यच्च त्र्यावय(छ)स्त्रैष्टुभः स्मृतः ॥२१॥
षष्ठी(ज)त्वेका विराट्स्थाना सा च स्वस्ति न इत्यसौ ।
ककुन्नीती(झ)ति गायत्रस्त्वस्यैकानुष्टुबुत्तमा(ञ) ॥२२॥
पराश्चि(ट)त्रैष्टुभान्येव तथापि प्रथमे पुनः ।
सं सोमासो(ठ)ति गायत्र्यो द्वादशोष्णिगतः परा(ड) ॥२३॥
चतु(ढ)र्जगत्यः प्रथमा अपान्त्यान्त्याः(ण) ककुप्पिषः ।
सप्तमस्य तु सूक्तस्य तिस्रो(त)ऽनुष्टुभ आदितः ॥२४॥
नवमीप्रभृति(थ)स्तस्य गायत्र्योऽस्य परस्तृचः ।
कुत्ससूक्तेषु गायत्रं चतुर्थं(द) त्रैष्टुभेष्वथ ॥२५॥
पाङ्क्तं द्वादशमं(ध) सूक्तमुद्धृत्यान्त्यान्तथाष्टमीम् ।
महापदपङ्क्त्यष्टमी(न) सा यवमध्या च योद्धृता ॥२६॥

---

(क) सू० ८६। (ख) सू० ८७। (ग) सू० ८८, ऋ० १, ६। (घ) सू० ८८, ऋ० २, ३, ४। (ङ) सू० ८८, ऋ० ५। (च) सू० ८९। (छ) ८९, ऋ० ८, ९, १०। (ज) सू० ८९, ऋ० ६। (झ) सू० ९०। (ञ) सू० ९०, ऋ० ९। (ट) सू० ९१, ९२, ९३। (ठ) सू० ९१, ऋ० ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६। (ड) सू० ९१, ऋ० १७। (ढ) सू० ९१, ऋ० १, २, ३, ४। (ण) सू० ९१, ऋ० १८, १९, २०, २१, २२, २३। (त) सू० ९३, ऋ० १, २, ३। (थ) सू० ९३, ऋ० ९, १०, ११। (द) सू० ९७। (ध, सू० १०५। (न) सू० १०५, ऋ० ८।

प्रथम(क)श्चैकविंश(ख)श्च नवम(ग)श्चाष्टमं(घ) ततः ।
ऊर्ध्वं(ङ)श्च षोडश त्रीणि(च) सप्तमश्च त्रयोदशम्(छ) ॥२७॥
एतानि त्वागतान्येषु प्रथमेऽन्त्यं तृचं(ज) विना ।
एकोनविंशे(झ) चैकविंशे(ञ) तथैवान्त्यं तृचं विना ॥२८॥
तृचं त्रयोदशे(ट) त्वन्त्यां नवमे(ठ)ऽष्टादशे(ड) विना ।
ततं मे पञ्चमीं चान्त्या(ढ)मष्टमेऽन्त्यौ तृचौ(ण) विना ॥२९॥
कक्षीवतस्तु सूक्तेषु चतुर्थं(त) तस्य आगतम् ।
उपोत्तमस्य ऋचौ द्वे चतुर्थी पञ्चमी(थ) च या ॥३०॥
पञ्चमस्य तु गायत्र्यस्तिस्रोऽन्त्याः प्रथमा(द) च या ।
अनुष्टुभौ विराजौ वा नवमी चाष्टमी(ध) च या ॥३१॥
अनुष्टुप्सु चतुर्थी(न) च सप्तमी(प) बृहती विराट् ।
तृतीया पञ्चमी षष्ठी द्वितीया(फ) चोष्णिगक्षरैः ॥३२॥
गायत्री वा द्वितीया(ब)श्च तृतीया(भ) त्रिष्टुबेव वा ।

---

(क) सू० [illegible] । (ख) सू० ११० । (ग) सू० १०२ । (घ) सू० १०१ । (ङ) सू० ११४ । (च) सू० ११०, १११, ११८ । (छ) सू० १०६ । (ज) सू० ८४, ऋ० १५, १६ । (झ) सू० ११९, ऋ० १८, २० । (ञ) सू० ११५, ऋ० १०, ११ । (ट) सू० १०६, ऋ० ७ । (ठ) सू० १०२, ऋ० ११ । (ड) सू० १११, ऋ० ५ । (ढ) सू० ११०, ऋ० ५, ८ । (ण) सू० १०१, ऋ० ८, ९, १०, ११ । (त) सू० ११८ । (थ) सू० १२५, ऋ० ४, ५ । (द) १२०, ऋ० १, १०, ११, १२ । (ध) सू० १२ , ऋ० ८, ९ । (न) १२०, ऋ० ३ । (प) सू० १२०, ऋ० ७ । (फ) सू० १२०, ऋ० २, ३, ५, ६ । (ब) सू० १२०, ऋ० ८ । (भ) सू० १२०, ऋ० ९ ।

सप्तमस्य विराड्रूपे श्रुत मे(क) आव(ख) इत्यृचौ ॥२३॥
उत्तमस्य तु सूक्तस्य द्वे वामन्त्ये(ग) अनुष्टुभौ ।
अवशिष्टानि सूक्तानि(घ) त्रैष्टुभान्यवगम्यताम् ॥२४॥
आत्यष्ट्यान्यथ सूक्तानि परुच्छेपस्य तत्र तु ।
आद्यस्यातिधृति षष्ठी(ङ) सुषुमे(च)त्यतिशाक्वरम् ॥२५॥
सह मसा व(छ) इत्यन्या तृतीया(ज)त्यष्टिरुत्तमा(झ) ।
अष्टमस्यान्यया(ञ) साकं नवमस्याप्युपोत्तमे(ट) ॥२६॥
चतुर्थस्योत्तमा(ठ) त्रिष्टुप्दशमस्यो(ड)त्तमस्य(ढ) च ।
सप्तमस्यादितस्त्रिष्टुबेकस्या(ण)नुष्टुभस्तृच(त) ॥२७॥
गायत्री(थ) च धृति(द)श्चैव बृहत्यन्यस्य पञ्चमी(ध) ।
द्वे सूक्ते दीर्घतमस प्रथमे(न) जागते तयो ॥२८॥
पूर्वस्य दशमी(प) त्रिष्टुबथ चानुष्टुभ परम्(फ) ।
षष्ठश्च जागतं सूक्तं चतुर्थं पञ्चमं(ब) [redacted] परं ॥२९॥

---

(क) सू० १२२, ऋ० ६ । (ख) सू० १२२ ऋ० ५ । (ग) सू० १२६, ऋ० ६, ७ । (घ) सू० ११६, १७, १८, २१, २३, २४, २५ । (ङ) सू० १२७, ऋ० ६ । (च) सू० १२० । (छ) सू० १२८, ऋ० ८, ९ । (ज) सू० १२९, ऋ० ११ । (झ) सू० १०८, ऋ० ३ । (ञ) सू० १२८, ऋ० ११ । (ट) सू० १३०, ऋ० १० । (ठ) सू० १३१, ऋ० ७ ८ । (ड) सू० १३०, ऋ० ६ । (ढ) सू० १३६, ऋ० ७ । (ण) सू० १३६, ऋ० ११ । (त) सू० १३३ ऋ० २, ३ ४ । (थ) सू० १३३ ऋ० ५ । (द) सू० १३३ ऋ० १ । (ध) सू० १३८, ऋ० ५ । (न) सू० १४०, १४१ । (प) सू० १४०, ऋ० १० । (फ) सू० १४२ । (ब) सू० १४३, १४४, १४५ ।

वैराजं दशमं(क)तस्मात्परे औष्णिह(ख)जागते(ग) ।
जागतानि तु सूक्तानि षोड़शप्रभृतीनि षट्(घ) ॥४०॥
अनुष्टुबन्तादन्यानि वस्तू रुद्रेतित्रैष्टुभात्(ङ) ।
त्रयोविंशस्य सूक्तस्य सह षष्ठ्या तृतीयया(च) ॥४१॥
अस्य वामीय सूक्तस्य जगत्यः षड़िमा ऋचः ।
पञ्चपादं(छ) साकं जानां(ज) यज्ञायचे(झ)अयं स(ञ) च ॥४२॥
सप्तार्धगर्भा(ट) गौरी(ठ)श्च तस्यानुष्टुबुपोत्तमा(ड) ।
प्रस्तारपङ्क्तिस्तु विराड्द्वाचत्वारिंशृग(ढ)स्य या ॥४३॥
अतोऽन्यत्त्रैष्टुभं सर्व्वं शिष्टमत्रावगम्यताम् ।
अत्र द्वित्रिष्टुबन्तानि प्रथमे द्वे(ण) अबोधि(त) च ॥४४॥
त्रिष्टुबन्तानि चैतानि जागतेषु प्रतव्यसीम्(थ) ।
तं इच्छन्त(द) किमु श्रेष्ठ(ध) इति चैष्ववगम्यताम् ॥४५॥
अगस्त्यस्य च सूक्तेषु गायत्रं सूक्तमष्टमम्(न) ।
द्वितीयं जागतं सूक्तं ऋच(प)मुद्धृत्य तूत्तमम् ॥४६॥
अष्टादशं(फ) चतुर्थं(ब)श्च द्वे एते जागते तयोः ।

---

(क) सू० १४९ । (ख) सू० १५० । (ग) सू० १५१ । (घ) सू० १५५, १५६, १५७, १५९, १६०, १६१ । (ङ) सू० १५८ । (च) सू० १६२, ऋ० ३, ६ । (छ) सू० १६४, ऋ० १२ । (ज) सू० १६४, ऋ० १५ । (झ) सू० १६४, ऋ० २३ । (ञ) सू० १६४, ऋ० २९ । (ट) सू० १६४, ऋ० ३६ । (ठ) १६४, ऋ० ४१ । (ड) सू० १६४, ऋ० ५१ । (ढ) सू० १६४, ऋ० ४२ । (ण) सू० १४०, ऋ० १२, १३ । सू० १४१, ऋ० १२, १३ । (त) सू० १४७, ऋ० ५, ६ । (थ) सू० १४३, ऋ० १ । (द) १४५, ऋ० १ । (ध) सू० १६१, ऋ० १ । (न) सू० १७२ । (प) सू० १६६, ऋ० १४, १५ । (फ) सू० १८२ । (ब) सू० १६८ ।

आद्यादुद्धृत्य पञ्चम्यो(क) चतुर्थ्याद्योत्तम रूपम्(ख) ॥४७॥
षष्ठ(ग)मेकादश(घ)स्यास्य सूक्ते आनुष्टुभे परे ।
उभयोस्तृतीया(ङ) त्रिष्टुबाद्या(च) तु बृहती तयो ॥४८॥
एकादशे(छ)ऽस्य बृहती स्कन्धोग्रीवीति गम्यताम् ।
पञ्चमस्य तु सूक्तस्य द्वितीया(ज)ऽनुष्टुब्विराट् स्मृता ॥४९॥
द्वादशस्योत्तमा(झ)त्रिष्टुप् शिष्टा सर्वा अनुष्टुभ ।
एका पञ्चदशे सूक्ते पञ्चमी(ञ) बृहतीमिष्टत् ॥५०॥
त्रयोविंश(ट)स्तु गायत्र तस्योष्णिक् प्रथमा(ठ) तु च्यृक् ।
अनुष्टुब्गर्भरूपोष्णिगथवैषा(ड)वगम्यताम् ॥५१॥
तृतीया पञ्चमी षष्ठी सप्तमी(ढ)ता अनुष्टुभ ।
अनुष्टुब्बृहती चाद्या(ण) गायत्र सूक्तमुत्तरम(त) ॥५२॥
विंशेय उत्तमे सूक्ते दशमीप्रभृतित्र्यृच(थ) ।
आनुष्टुभ महापङ्क्ती मध्या च बृहती परा(द) ।
अवशिष्टानि सूक्तानि (ध)त्रैष्टुभान्यवगम्यताम् ॥१५३॥

इति प्रथम मण्डलम् ।

---

(क) सू० १८२, ऋ० ६, ८ । (ख) सू० १६८, ऋ० ८, ६, १० । (ग) सू० १७० । (घ) १७१ । (ङ) सू० १७०, ऋ० ५, सू० १७५, ऋ० ६ । (च) सू० १७०, ऋ० १ । १७५, १ । (छ) सू० १७५, ऋ० १ । (ज) सू० १९९, ऋ० २ । (झ) १७६ ऋ० ६ । (ञ) सू० १८९, ऋ० ५ । (ट) सू० १८७ । (ठ) सू० १८७, ऋ० १ । (ड) सू० १८७, ऋ० २ । (ढ) सू० १८७, ऋ० ३ ५, ६, ७ । (ण) सू० १८७, ऋ० ११ । (त) सू० १८८ । (थ) सू० १९१, ऋ० १०, ११, १२ । (द) सू० १९१, ऋ० १६ । (ध) सू० ६६, ६७, ६९, ७१, ७२, ७३, ७४, ७७, ७८, ७९, ८०, ८२, ८३, ८४, ८५, ८६, ८९, ९० ।

## अथ द्वितीयं मण्डलम् ।



सूक्त गार्त्समदस्याथ प्रथमे(क) आगते उभे ।
साध्वपांसी(ख)ति चर्षौ द्वे तृतीये त्रैष्टुभे सति ॥१॥
त्रैष्टुभात्तुष्टुभे त्वग्ने चतुर्थं पञ्चमं(ग) च यत् ।
गायत्र(घ)माष्टमात्सर्वे तत्रैकानुष्टुबुत्तमा(ङ) ॥२॥
ऊर्ध्वं चत्वारि(च) षड्विंशादूर्ध्वञ्च द्वे(छ) चयोदशात् ।
चौपि(ज) सप्तदशादूर्ध्वमूर्ध्वं चत्वारि(झ) चाष्टमात् ॥३॥
सर्वाण्येतानि सूक्तानि त्रैष्टुभानि त्रयोदश ।
उत्तमस्योत्तमा(ञ)मेषामुद्धृत्य जगतीमृचम् ॥४॥
विश्वं मरय(ट)मिति त्रिष्टुब्बृहस्पते अती(ठ)ति च ।
अतोऽन्यस्मागतं सूक्तं भागाते मित(ड)रित्यतः ॥५॥

---

(क) सू० १, २ । (ख) सू० ३, ऋ० ६, ७ । (ग) सू० ४, ५ । (घ) सू० ६, ७, ८ । (ङ) सू० ८, ऋ० ६ । (च) सू० २६, २७, २८, २९ । (छ) सू० १४, १५ । (ज) सू० १८, १९, २० । (झ) सू० ९, १०, ११, १२ । (ञ) सू० ४३, ऋ० ३ । (ट) सू० २४, ऋ० १२ । (ठ) सू० २३, ऋ० १५ । (ड) सू० ३२ ।

अच्छा[क]दि सूक्तमुद्धृत्य द्वाविंश[ख]मतिशाक्वरम् ।
अष्टिपञ्चपदावन्त्ये[ग] तृतीय.[घ] षोड़शाक्षरः ॥६॥
सिनीवालि[ङ] यास्तवाश्च[च] यांगुङ्गुरि[छ]त्यनुष्टुभः ।
त्रैष्टुभस्य तु शेषस्य चतुर्थ[ज] पञ्चम[झ] च यत् ॥७॥
जागतानि द्वितीयस्य[ञ] द्वितीयाद्यर्त्तं उत्तमम्[ट](१) ।
गायत्रं नवमं[ठ] तस्य सारस्वत्या[ड]वनुष्टुभौ ॥८॥
इमा ब्रह्मे[ढ]ति बृहती षोड़ृता[ण] शातिशक्वरी ।
तदस्मै त्रिचिष्टुबन्त[त] सूक्तं सप्तदशन्तु यत् ॥९॥
त्रयोदशं चतुस्त्रिंशमेकविंशं च षोडशम् ।
एकविंशं त्रयोविंशं चतुर्विंशस्य सप्त तु ॥१०॥
एतानि[थ] त्रिष्टुबन्तानि गम्यतां जागतेष्वपि ॥२४०॥

इति द्वितीयं मण्डलम् ।

---

(१) पञ्चमोत्तर उत्तमे(द) इति पाठ सम्भवितुमर्हति ।

---

(क) सू॰ २२, ऋ॰ १। (ख) सू॰ २२। (ग) सू॰ २२, ऋ॰ ४। (घ) सू॰ २२, ऋ॰ ३। (ङ) सू॰ ३२, ऋ॰ ६। (च) सू॰ ३२, ऋ॰ ७। (छ) सू॰ ३२, ऋ॰ ८। (ज) सू॰ ३३, ३६। (झ) सू॰ २४, ३७। (ञ) सू॰ २१, ३४। (ट) सू॰ २६। (ठ) सू॰ ४१। (ड) सू॰ ४१, ऋ॰ १६, १७। (ढ) सू॰ ४१, ऋ॰ १८। (ण) सू॰ ४३, ऋ॰ २। (त) सू॰ १०, ऋ॰ ८, ९। (थ) सू॰ १३, ऋ॰ १३, सू॰ १४, ऋ॰ १५, सू॰ ११, ऋ॰ ७, सू॰ १६, ऋ॰ ९, सू॰ २१, ऋ॰ ५; सू॰ २३, ऋ॰ १९, सू॰ २४, ऋ॰ १६। (द) सू॰ २५, २६।

# अथ तृतीयं मण्डलम्।



द्वितीय(क)श्च तृतीय(ख)श्च विश्वामित्रस्य जागते ।
नवमं(ग) बार्हतं सूक्तं त्रिष्टुबस्योत्तमा(घ)निरुत् ॥१॥
औष्णिहं(ङ) द्वे च गायत्रे(च) बार्हतादुत्तराणि तु ।
षोडशे षड्ऋचे सूक्ते(छ) प्रगाथा बार्हता द्वृचाः ॥२॥
तुभ्यं स्तोका(ज)घृतवन्तः(झ) सप्तर्षन्तु त्र्योदग्राम्(ञ) ।
ये वृक्णास.(ट) पुरीष्यास.(ठ) उच्छ्रयस्वे(ड)त्यनुष्टुभः ॥३॥
त्रिष्टुबेव विराड्रूपा तुभ्यं श्चोतंत्य(ढ)त्र या ।
घृतोत्पत्यौ तत्र द्वे ओजिष्ठन्ते(ण) दश क्षिपः(त) ॥४॥
अतोऽन्यत्त्रैष्टुभं सर्वमानिर्मथित(थ) इत्यतः ।
अनुष्टुभादिगायत्रं(द) वैराजं चोत्तरे(ध) ततः ॥५॥
उत्तर(न) जागतं तस्य त्रिष्टुभस्तिस्र उत्तमाः(प) ।
गायत्रे उत्तरे सूक्ते(फ) तयोः षड्ऋच उत्तरे ॥६॥

---

(क) सू॰ २। (ख) सू॰ ३। (ग) सू॰ ९। (घ) सू॰ ९, ऋ॰ ९। (ङ) सू॰ १०। (च) सू॰ ११, १२। (छ) सू॰ १६। (ज) सू॰ २१, ऋ॰ १। (झ) सू॰ २१, ऋ॰ २। (ञ) सू॰ १३। (ट) सू॰ ८, ऋ॰ ७। (ठ) सू॰ २२, ऋ॰ ४। (ड) सू॰ ८, ऋ॰ ३। (ढ) सू॰ २१, ऋ॰ ४। (ण) सू॰ २१, ऋ॰ ५। (त) सू॰ २३, ऋ॰ ३। (थ) सू॰ २३। (द) सू॰ २४। (ध) सू॰ २५। (न) सू॰ २६। (प) सू॰ २६, ऋ॰ ७, ८, ९। (फ) सू॰ २७, २८।

उष्णिक्त्रिष्टुब्जगत्येव[१] तृतीयामष्टतिर्ऋचः[क] ।
अस्तीद्[ख]स्त्रैष्टुभं तस्य जगत्यौ द्वे उपोत्तमे[ग] ॥७॥
एकादशी[घ] च षष्ठी[ङ] च तावत्योऽन्या अनुष्टुभः ।
प्रथमा च चतुर्थी च दशमी द्वादशी[च] च या ॥८॥
एता अनुष्टुभः सर्वा नदीस्तोत्रस्य चोत्तमा[छ] ।
अतोऽन्यत्त्रैष्टुभं सर्वं यदिन्द्रं मति[ज]रित्यतः ॥९॥
अनुष्टुभ[झ]न्तमुद्धृत्य गायत्रं सूक्त[ञ]मष्टमम् ।
गायत्राणि तु वै त्रीणि[ट] त्रैष्टुभ[ठ]न्द्वे [ड]च पार्वते ॥१०॥
षड्[ढ]त्तराणि सूक्तानि त्रैष्टुभान्युत्तरस्य तु ।
जगत्यः प्रथमास्तिस्र[ण]स्तिस्रो गायत्र्य उत्तमाः[त] ॥११॥
गायत्र्युत्तमं[थ] तस्य षष्ठे[द]का जगतीनिचृत् ।
पञ्चमी[ध] चोत्तमे[न] च द्वे त्रिष्टुभस्त्रैष्टुभे परे[प] ॥१२॥
दशमी[फ] [illegible] जगत्यस्य गायत्री च त्रयोदशी[ब] ।

---

(क) सू० २८, ऋ० ३, ४, ५ । (ख) सू० २९ । (ग) सू० २९, ऋ० १४, १५ । (घ) सू० २९, ऋ० ११ । (ङ) सू० २९, ऋ० ६ । (च) सू० २९, ऋ० १, ४, १०, १२ । (छ) सू० ३३, ऋ० १३ । (ज) सू० ३९ । (झ) सू० ३०, ऋ० ११ । (ञ) सू० ३७ । (ट) सू० ४०, ४१, ४२ । (ठ) सू० ४३ । (ड) सू० ४४, ४५ । (ढ) सू० ४६, ४७, ४८, ४९, ५०, ५१ । (ण) सू० ५१, ऋ० १, २, ३ । (त) सू० ५१, ऋ० १०, ११, १२ । (थ) सू० ५२ । (द) सू० ५२, ऋ० ६ । (ध) सू० ५२, ऋ० ५ । (न) सू० ५२ ऋ० ७, ८ । (प) सू० ५३ । (फ) सू० ५३, ऋ० १० । (ब) सू० ५३, ऋ० १३ ।

---

(१) एवेति पाठो भवितुमर्हति ।

अनुष्टुभस्तु विंशी च द्वाविंशी द्वादशी[क] च या ॥१३॥
अष्टादशी[ख] बृहत्यश्च जगत्येव तु षोडशी[ग]।
इमं मह उपक्रम्य त्रैष्टुभान्युत्तराणि षट्[घ] ॥१४॥
तेषां षष्ठे चतस्रस्तु मैत्रे गायत्र्य उत्तमाः[ङ]।
जागत[च]त्रैष्टुभे[छ] सूक्ते सप्तर्चे द्वे उपोत्तमे।
गायत्रमुत्तमं[ज] तस्य त्रिष्टुभस्तिस्र[झ] आदितः ॥१५॥

इति तृतीयं मण्डलम्।

---

(क) सू॰ ५३, ऋ॰ १९, २०, २१। (ख) सू॰ ५३, ऋ॰ १८। (ग) सू॰ ५३, ऋ॰ १६। (घ) सू॰ ५४, ५५, ५६, ५७, ५८, ५९। (ङ) सू॰ ५९, ऋ॰ ६, ७, ८, ९। (च) सू॰ ६०। (छ) सू॰ ६१। (ज) सू॰ ६२। (झ) सू॰ ६२, ऋ॰ १, २, ३।

चतुर्थस्योत्तमा[क]मेकामृचमुद्धृत्य चोभयोः ।
प्रथमा[ख] मृचमुद्धृत्य अष्टमस्यापि जागतम् ॥७॥
अनुष्टुप्सप्तमस्यान्त्या[ग] चतस्रोऽन्त्या[घ]श्च पञ्चमे ।
पञ्चमस्यानुवाकस्य मध्ये गायत्रयोर्द्वयोः[ङ] ॥८॥
द्वितीयस्य[च] तृतीयस्य[छ] सूक्ते आनुष्टुभे उभे ।
गायत्रं सप्तमं[ज] सूक्तं जागते नवमाष्टमे[झ] ॥९॥
नवमस्य तु ये ते चिरित्यन्त्या[ञ] मृचं विना ।
जगत्येवोत्तमस्यान्त्या[ट]दशमी[ठ] पञ्चमस्य तु ॥१०॥
एकादशस्य गायत्र्यृचोऽन्त्यो[ड]दशमस्य च ।
द्वादशे तु द्वितीया च तृतीया चोत्तमा[ढ] च या ।
आनुष्टुभे त्रिष्टुभस्ताः पुरउष्णिक् च पञ्चमी[ण] ॥११॥

इति चतुर्थं मण्डलम् ।

---

(क) सू० २६, ऋ० ९ ; सू० ४५, ऋ० ७ । (ख) सू० ४०, ऋ० १ । (ग) सू० ३९, ऋ० ६ । (घ) सू० ३७, ऋ० ५, ६, ७, ८ । (ङ) सू० ४६, ४९ । (च) सू० ४७ । (छ) सू० ४८ । (ज) सू० ५२ । (झ) सू० ५३, ५४ । (ञ) सू० ५४, ऋ० ६ । (ट) सू० ५८, ऋ० ११ । (ठ) सू० ५०, ऋ० १० । (ड) सू० ५५, ऋ० ८, ९, १० ; सू० ५६, ऋ० ५, ६, ७ । (ढ) सू० ५७, ऋ० २, ३, ८ । (ण) सू० ५०, ऋ० ५ ।

# अथ चतुर्थं मण्डलम्।

प्रथमा[क] चेष्टुभेष्वष्टिर्वामदेवस्य षट्पदा।
द्वितीया[ख] त्रिजगत्यस्य तृतीया[ग]स्यां निचृद्धृतिः ॥१॥
सप्तमस्य तु सूक्तस्य प्रथमा[घ] जगतीनिष्टत्।
अनुष्टुभः पराः पञ्च प्राक्[ङ] समस्य पदि[च]त्यतः ॥२॥
गायत्रे दशमे सूक्ते भुरिजः पट्पङ्क्तय[छ]।
उष्णिहो वा विराजस्ता[ज] पञ्चम्या[झ]सामनुष्टुपा ॥३॥
य दमे च महापूर्वा पदपङ्क्तिर्निगद्यते।
अग्निर्होते[ञ]ति गायत्रं नवमं चाष्टमं[ट] च यत् ॥४॥
अयं चक्र[ठ]मथ श्वेत[ड] प्रकर्ष्यावस्य ते उभे।
गायत्राणि तु वै चौथि[ढ] न किरिग्धेति तत्र तु ॥५॥
याम वामस्ते[ण] क दम[त]मेतद्दे[थ]त्यनुष्टुभः।
चतुर्थस्यानुवाकस्य जागतं सूक्तमुत्तमम्[द] ॥६॥

---

(क) सू० १, ऋ० १। (ख) सू० १, ऋ० २। (ग) सू० १, ऋ० ४। (घ) सू० ७, ऋ० १। (ङ) सू० ७, ऋ० २, ३, ४, ५, ६। (च) सू० ७, ऋ० ७। (छ) सू० १०, ऋ० १, २, ३। (ज) सू० १० ऋ० ४, ६, ७, ८। (झ) सू० १०, ऋ० ५। (ञ) सू० १५। (ट) सू० ८, ९। (ठ) सू० १७, ऋ० १४। (ड) सू० २७, ऋ० ५। (ढ) सू० ३०, ३१, ३२। (ण) सू० ३०, ऋ० २४। (त) सू० २४, ऋ० १०। (थ) सू० ३० ऋ० ८। (द) सू० ४५।

## अथ पञ्चमं मण्डलम् ।



आनुष्टुभानां सूक्तानां पङ्क्तिरन्या(क)त्रिमण्डले ।
उरोष्ट(ख) इन्द्र(ग)कुष्ठो(घ)ऽच्छ(ङ)बलित्था द्वे(च)यदद्य(छ) च ॥१॥
विदा(ज)आचिकिताने(झ)ति सूक्तान्येतान्यपास्य तु ।
अग्नीषा पञ्चमं(ञ) सूक्तं गायत्रं पाङ्क्तमुत्तरं(ट) ॥२॥
आनुष्टुभं सप्तमं(ठ)न्तु जागतं सूक्तमष्टमं(ड) ।
नवमं दशमं(ढ)ह्येषा सूक्ते आनुष्टुभे तयोः ॥३॥
पूर्वस्य पञ्चमी(ण)पङ्क्तिश्चतुर्थी(त) परमस्य च ।
अतोऽन्यत्त्रैष्टुभं सर्वमाश्वमेधक(थ)इत्यतः ॥४॥
उद्धृत्योपोत्तमे सूक्ते गायत्रेऽर्चना इत्युभे(द) ।
मकरोद्य चतुर्विंशो जनस्ये(ध)ति च जागतं ॥५॥
अष्टौ पराणि सूक्तानि(न) ज्ञेयान्यानुष्टुभान्यतः ।
चतुर्थ्यन्या(प)विराड्रूपा आद्ये(फ)गायत्र्यौ त्विह ॥६॥

(क) सू० ७, १६, १७, १८, २०, २१, २२, २३, ३६। (ख) सू० ३८। (ग) सू० ३९। (घ) सू० ७४। (ङ) सू० २५। (च) सू० ६७, ८४। (छ) सू० ८२। (ज) सू० ७५। (झ) सू० ६६। (ञ) सू० ५। (ट) सू० ६। (ठ) सू० ७। (ड) सू० ८। (ढ) सू० ९, १०। (ण) सू० ९, ऋ० ५। (त) सू० १०, ऋ० ४। (थ) सू० १५। (द) सू० १३, १४। (ध) सू० ११। (न) सू० १६, १७, १८, १९, २०, २१, २२, २३। (प) सू० १९, ऋ० ५। (फ) सू० १९, ऋ० १, २।

द्वैपदा(क)नुष्टुभे(ख) च द्वे गायत्रं तत उत्तरं(ग) ।
त्रैष्टुभा(घ)नुष्टुभौ(ङ)सूक्ते परे पूर्वापरौ तृचौ ॥७॥
अनुष्टुब्(च)द्वे च गायत्र्यौ(छ) उत्तरस्योत्तरस्तृचः ।
त्रिष्टुबेका(ज)जगत्येका(झ)त्रिष्टुबेका(ञ)द्वितस्तृचः ॥८॥
त्रैष्टुभान्येव(ट) पञ्चोर्ध्वं परन्त्वेभ्यस्तु जागतं(ठ) ।
एतत्तु त्रिष्टुबन्त(ड)ञ्च यत्त्(ढ)वानुष्टुभं परं ॥९॥
स आगमत्त्रैष्टुभे द्वे(ण) द्वे(त) एवानुष्टुभे उरोः ।
स आगमदिति त्वस्य तृतीया(थ) जगती स्मृता ॥१०॥
उत्तराणि तु सूक्तानि(द) चत्वारि त्रैष्टुभान्यतः ।
तेषामेकातिजगती द्वितीयस्यास्ति पोलवी(ध) ॥११॥
प्रथमस्य नवर्चस्य प्रथमा(न)स्तिस्र उष्णिहः ।
अभि न इन्द्रे(प)ति त्रिषु(फ)मेष स्तोमो(ब)ऽदृदयः(भ) ॥१२॥
एता एतेषु मकर्यां यं वै(म)यत्ने(य)त्यनुष्टुभे ।

---

(क) सू० २४ । (ख) सू० २५ । (ग) सू० २६ । (घ) सू० २७, ऋ० १, २, ३ । (ङ) सू० २७ ऋ० ४, ५, ६ । (च) सू० २८, ऋ० ४ । (छ) सू० २८, ऋ० ५, ६ । (ज) सू० २८, ऋ० १ । (झ) सू० २८, ऋ० २ । (ञ) सू० २८, ऋ० ३ । (ट) सू० २९, ३०, ३१, ३२, ३३ । (ठ) सू० ३४ । (ड) सू० ३४, ऋ० ९ । (ढ) सू० ३५ । (ण) सू० ३६, ३७ । (त) सू० ३८, ३९ । (थ) सू० ३६, ऋ० ३ । (द) सू० ४०, ४१, ४२, ४३ । (ध) सू० ४१, ऋ० १६ । (न) सू० ४०, ऋ० १, २, ३ । (प) सू० ४१, ऋ० १९ । (फ) सू० ४१, ऋ० १० । (ब) सू० ४२, ऋ० १६ । (भ) सू० ४२, ऋ० १५ । (म) सू० ४०, ऋ० ९ । (य) सू० ४०, ऋ० ५ ।

द्विपदा(क)नुष्टुभे(ख) च द्वे गायत्रं तत उत्तरं(ग) ।
त्रैष्टुभा(घ)नुष्टुभौ(ङ)सूक्ते परे पूर्वापरौ तृचौ ॥७॥
अनुष्टुब्(च)द्वे च गायत्र्यौ(छ) उत्तरस्योत्तरस्तृचः ।
त्रिष्टुबेका(ज)जगत्येका(झ)त्रिष्टुबेका(ञ)द्वितस्तृचः॥८॥
त्रैष्टुभान्येव(ट) पञ्चोर्ध्वं परन्तेभ्यस्तु जागतं(ठ) ।
एतत्तु त्रिष्टुबन्त(ड)श्च यस्त(ढ)श्चानुष्टुभं परं ॥९॥
स आगमत्त्रैष्टुभे द्वे(ण) द्वे(त) एवानुष्टुभे उरोः ।
स आगमदिति त्वस्य तृतीया(थ) जगती स्मृता ॥१०॥
उत्तराणि तु सूक्तानि(द) चत्वारि त्रैष्टुभान्यतः ।
तेषामेकातिजगती द्वितीयस्यास्ति योजगौ(ध) ॥११॥
प्रथमस्य नवर्चस्य प्रथमा(न)स्तिस्र उष्णिहः ।
अभि म इळे(प)तिविसु(फ)प्रेष स्तोमो(ब)एवहयः(भ) ॥१२॥
एता एतेषु मक्षर्यौ यं वै(म)यत्ते(य)त्यनुष्टुभे ।

---

(क) सू० २४ । (ख) सू० २५ । (ग) सू० २६ । (घ) सू० २७, ऋ० १, २, ३ । (ङ) सू० २७ ऋ० ४, ५, ६ । (च) सू० २८, ऋ० ४ । (छ) सू० २८, ऋ० ५, ६ । (ज) सू० २८, ऋ० १ । (झ) सू० २८, ऋ० २ । (ञ) सू० २८, ऋ० ३ । (ट) सू० २९, ३०, ३१, ३२, ३३ । (ठ) सू० ३४ । (ड) सू० ३४, ऋ० ९ । (ढ) सू० ३५ । (ण) सू० ३६, ३७ । (त) सू० ३८, ३९ । (थ) सू० ३६, ऋ० ३ । (द) सू० ४०, ४१, ४२, ४३ । (ध) सू० ४१, ऋ० १६ । (न) सू० ४०, ऋ० १, २, ३ । (प) सू० ४१, ऋ० १९ । (फ) सू० ४१, ऋ० १७ । (ब) सू० ४२, ऋ० १६ । (भ) सू० ४३, ऋ० १५ । (म) सू० ४०, ऋ० ९ । (य) सू० ४०, ऋ० ५ ।

जागत(क)त्रिष्टुभा(ख)न्येव व्यत्यसात्युत्तराणि षट् ॥१३॥
तत्राद्य द्विस्त्रिष्टुब(ग)न्तं सूक्तं प्रक्षेत्यदः ।
त्रिष्टुबन्त्या(घ) तृतीयस्याद्यच मार्कं द्वितीयया(ङ) ॥१४॥
त्रिस्र(च) आनुष्टुभं सूक्तं तेभ्यः पञ्चर्चमुत्तर(छ) ।
आद्या(ज)स्तस्रो गायत्र्य उत्तरस्त्रोष्णिहस्य षट्(झ) ॥१५॥
त्रिष्टुभस्तु जगत्यौ वा तिस्र(ञ)श्चान्त्ये(ट) अनुष्टुभौ ।
उद्धृत्य पौलमीं पङ्क्तिं षष्ठी(ठ)मानुष्टुभं परं ॥१६॥
को वेदसूक्ते गायत्र्या अष्टमी द्वादशी(ड) च या ।
तृतीया(ढ) नुष्टुभेवास्य द्वितीया(ण) ष्टतीनिवृत् ॥१७॥
पञ्चमीपङ्क्त्यादौ(त)प्रगाथौ काकुभौ द्वयौ ।
ककुभः प्रथमा यास्य दशम्येकादशी(थ) च या ॥१८॥
त्रिष्टुप् सप्तीदशाद्योऽन्या(द) श्चतुर्थ्याः(ध) पुरउष्णिक् ।
चतुर्थ्यानुवाकस्य जागते द्वे उपोत्तमे(न) ॥१९॥
उपान्त्या(प) प्रथमे त्रिष्टुबुत्तमा तूत्तरे(फ)तयोः ।

---

(क) सू० ४४, ४६, ४८ । (ख) सू० ४५, ४७, ४९ । (ग) सू० ऋ० १४, १५ । (घ) सू० ४९ ऋ० ८ । (ङ) सू० ४९, ऋ० २ । (च) सू० ५० । (छ) सू० ५०, ऋ० ५ । (ज) सू० ५१, ऋ० १, २, ३, ४ । (झ) सू० ५१, ऋ० ५, ६, ७, ८, ९, १० । (ञ) सू० ५१, ऋ० ११, १२, १३ । (ट) सू० ५१, ऋ० १४, १५ । (ठ) सू० ५२, ऋ० ६ १६ । (ड) सू० ५३, ऋ० ८, १२ । (ढ) सू० ५३, ऋ० ३ । (ण) सू० ५३, ऋ० २ । (त) सू० ५३, ऋ० ५, ६, १५, १६ । (थ) सू० ५३, ऋ० १, १०, ११ । (द) सू० ५३, ऋ० ७, ९, १३, १४ । (ध) सू० ५३, ऋ० ४ । (न) सू० ५४, ५५ । (प) सू० ५४, ऋ० १४ । (फ) सू० ५५, ऋ० १० ।

उत्तमं(क) बार्हतं त्वस्य प्रगाथौ बार्हतौ तृचौ ॥२०॥
द्वितीयाप्रभृतिः(ख) पूर्वः षष्ठीप्रभृति(ग)रुत्तरः ।
उत्तराणि तु चत्वारि (घ)व्यत्यस्तानि यथैव षट् ॥२१॥
द्वित्रिष्टुबन्तं(ङ) तचाद्यं द्विजगत्य(च)न्त्यमुत्तमम् ।
यदुत्तरं(छ) मध्यमयोस्तत्रापि त्रिष्टुबुत्तमा ॥२२॥
सूक्तं केष्ठे(ज)ति गायत्रमनुष्टुबस्य पञ्चमी(झ) ।
एका मतोऽहत्यस्य नवमी(ञ) त्रैष्टुभं परम्(ट) ॥२३॥
ऋतस्य(ठ) जागतं सूक्तं चत्वार्य(ड)नुष्टुभान्यथ ।
गायत्रं(ढ) त्रैष्टुभं(ण) च द्वे गायत्रे(त) चैक(थ)मौष्णिहम् ॥२४॥
आनुष्टुभे(द) च पाङ्क्तं(ध) च त्रैष्टुभे चोत्तरे(न) ततः ।
एक(प)मानुष्टुभं तस्य प्रथमा(फ)न्त्ये च उष्णिहः ॥२५॥
अग्निर्यदा(ब)मिति त्रिष्टुप्या त्वत्र प्रतीयताम् ।
सप्तोत्तराणि सूक्तानि पाङ्क्तं(भ) त्रैष्टुभ(म)जागते(य) ॥२६॥

---

(क) सू० ५६ । (ख) सू० ५६, ऋ० २, ३ । (ग) सू० ऋ० ५६, ६, ७ । (घ) सू० ५७, ५८, ५९, ६० । (ङ) सू० ५७, ऋ० ७, ८ । (च) सू० ६०, ऋ० ७, ८ । (छ) सू० ५९, ऋ० ८ । (ज) सू० ६१ । (झ) सू० ६१, ऋ० ५ । (ञ) सू० ६१, ऋ० ९ । (ट) सू० ६२ । (ठ) सू० ६३ । (ड) सू० ६४, ६५, ६६, ६७ । (ढ) सू० ६८ । (ण) सू० ६९ । (त) सू० ७०, ७१ । (थ) सू० ७२ । (द) सू० ७३, ७४ । (ध) सू० ७५ । (न) सू० ७६, ७७ । (प) सू० ७८ । (फ) सू० ७८, ऋ० १, २, ३ । (ब) सू० ७८, ऋ० ४ । (भ) सू० ७९ । (म) सू० ८० । (य) सू० ८१ ।

गायत्र[क] त्रैष्टुभे [ख]च द्वे मध्ये चानुष्टुभं[ग] तयोः ।
जागतोऽच्छावदेत्यस्मिन्विहचा[घ]निति यत्तृचः ॥२७॥
तत्सवितुर्वृणीमहे[ङ] यत्पर्जन्ये[च]त्यनुष्टुभौ ।
उपोत्तमस्य सूक्तस्य विराट्पूर्वा त्वगुत्तमा[छ] ॥२८॥
शिष्टा अनुष्टुभः सर्वा अतिजागतमुत्तमम्[ज] ।

इति पञ्चमं मण्डलम् ।

---

(क) सू० ८२। (ख) सू० ८३, ८५। (ग) सू० ८४। (घ) सू० ८६, ऋ० २, ३, ४। (ङ) सू० ८२, ऋ० १। (च) सू० ८३, ऋ० ६। (छ) सू० ८६, ऋ० ६। (ज) सू० ८७।

# अथ षष्ठं मण्डलम् ।



त्रैष्टुभेष्वष्टमं सूक्तं भरद्वाजस्य जागतम् ।
अद्व्येभिष्टवे(क) त्येतास्त्वमुद्धृत्य तूत्तमाम् ॥१॥
सप्तमं(ख) द्विजगत्यन्तं त्वं यतानीति शक्वरी(ग) ।
चतुर्दशं द्वितीयस्य सूक्ते आनुष्टुभे उभे ॥२॥
अच्छानो(घ)ऽभिमयांसी(ङ)ति शक्वर्यावेव ते उभे ।
जगत्यौ(च)शक्वरीनिचृज्जगत्या(छ)वतिशक्वरी(ज) ॥३॥
एतौ पञ्चदशस्य द्वौ जागतस्यादितस्तृचः ।
अनुष्टुप्सप्तदश्य(झ)स्य तृचस्त्वष्टादशी(ञ)निचृत् ॥४॥
षट्चत्वारिंश्य(ट)स्य त्रिष्टुप् गायत्रे सप्त षोडशे ।
सप्तविंश्युत्तमे च द्वे तिस्र एता अनुष्टुभ.(ठ) ॥५॥
चागाद्या वर्धमाना(ड)स्य षष्ठी चापि प्रतीयताम् ।
एका सप्तदशस्यामया(ढ) द्विपदा दशमस्य(ण) च ॥६॥

---

(क) सू० ८, ऋ० ७ । (ख) सू० ७, ऋ० ६, ७ । (ग) सू० २, ऋ० ११ । (घ) सू० १४, ऋ० ६ । (ङ) सू० १४, ऋ० १४ । (च) सू० १५, ऋ० १, २ । (छ) सू० १५, ऋ० ३ । (ज) सू० १५, ऋ० ६ । (झ) सू० १५, ऋ० १० । (ञ) सू० १५, ऋ० १८ । (ट) सू० १६, ऋ० ४६ । (ठ) सू० १६, ऋ० २७, ४७, ४८ । (ड) सू० १६, ऋ० १, ६ । (ढ) सू० १७, ऋ० १५ । (ण) सू० १०, ऋ० ७ ।

द्यौर्न सूक्ते गता या तृविपिमो(क) रिति सा विराट् ।
आ गाव इति सूक्तस्य द्वितीयाप्रभृतिष्टच ॥७॥
जागत(ख)स्त्रैष्टुभस्यास्तु तथैवानुष्टुबुत्तमा(ग) ।
आनुष्टुभ(घ) इन्द्रत्यन्त(ङ) प्रत्यक्षा इति सूक्तत ॥८॥
यस्मै(च)त्रिष्टुप् पर यत्तु तस्यादौ पङ्नुष्टुभ(छ) ।
विराज(ज) स्तुतगामिम्मासा मध्येव वा विराट्(झ) ॥९॥
य आमयदिति त्वस्मिन् गायत्र्यनुष्टुबुत्तमा(ञ) ।
पुरुतम(ट)मिति लेया तदेवानिमिच्छता ॥१०॥
त्वामिद्धिसूक्ते प्रागाथे प्रगाथा बार्हता(ठ)द्युता ।
स्वादुष्किलेति सूक्तस्य जगती सप्तविंश(ड)च ॥११॥
चतुर्विंशौ(ढ) तु गायत्री चयोविंशौ(ण)त्वनुष्टुबुक् ।
ऊनविंशौ(त) इहत्यस्य गायत्र्या द्विपदोत्तरा(थ) ॥१२॥
स्तुषे जनमिति त्वस्य शक्वर्येकोत्तमा(द) त्रिष्टुप् ।
आदित प्रश्निसूक्तस्य प्रगाथौ बार्हतौ(ध) द्वयौ ॥१३॥

---

(क) सू० २०, ऋ० ७ । (ख) सू० २८, ऋ० १, २, ३ । (ग) सू० २८ ऋ० ८ । (घ) सू० ४२, ऋ० १, २, ३ । (ङ) सू० ४२, ऋ० ४ । (च) सू० ४३ । (छ) सू० ४४, ऋ० १ २, ३ ४, ५, ६ । (ज) सू० ४४, ऋ० ७, ८, ९ । (झ) सू० ४४ ऋ० ८ । (ञ) सू० ४५, ऋ० ३३ । (ट) सू० ४५ ऋ० ३९ । (ठ) सू० ४६, ऋ० ६, ७ । (ड) सू० ४७, ऋ० २७ । (ढ) सू० ४७, ऋ० २८ । (ण) सू० ४७, ऋ० २९ । (त) सू० ४७, ऋ० १९ । (थ) सू० ४७ ऋ० २५ । (द) सू० ४८, ऋ० १५ । (ध) सू० ४८, ऋ० १, २ ।

बृहती(क) जगती(ख) त्रिष्टु(ग)ब्जगती(घ) चोत्तरा ऋचः ।
उत्तरौ च प्रगाथौ द्वौ हृचौ बार्हत(ङ)काकुभौ(च) ॥१४॥
अष्टादशीत्रयोदश्योरन्तरा(छ)पुरउष्णिहः ।
बृहत्य(ज)तिजगत्यौ(झ) च प्रगाथश्चैव काकुभः(ञ) ॥१५॥
द्वे बृहत्यौ(ट) त्रिष्टुबे(ठ)कानुष्टुप(ड)श्चोत्तरा ऋचः ।
महासतोबृहत्यौ(ढ) च महा च बृहतीद्वयम्(ण) ॥१६॥
जगती(त)त्रिष्टुबि(थ)त्याभ्यां शब्दाभ्यामत्र लक्ष्यते ।
पञ्चमस्यानुवाकस्य दशममृच चौष्णिहः(द) ॥१७॥
तृतीयस्य तु गायत्र्यो विश्वेदेवास ए(ध)ति षट् ।
गायत्रं(न) पञ्च सूक्तानि चतुर्थप्रभृतीन्यथ ॥१८॥
विश्वेदेवासमस्मा(प)त्रायो जगत्यावेव(फ) ते उभे ।
आ ते स्वस्ति(ब)मपि पन्था(भ) यां पूष(म)न्नित्यनुष्टुभः ॥१९॥

---

(क) सू० ४८, ऋ० १। (ख) सू० ४८, ऋ० ३। (ग) सू० ४८, ऋ० ५। (घ) सू० ४८, ऋ० ९। (ङ) सू० ४८, ऋ० १०। (च) सू० ४८, ऋ० ११। (छ) सू० ४८, ऋ० १३, १८। (ज) सू० ४८, ऋ० १४। (झ) सू० ४८, ऋ० १५। (ञ) सू० ४८, ऋ० १६। (ट) सू० ४८, ऋ० १९, २०। (ठ) सू० ४८, ऋ० २१। (ड) सू० ४८, ऋ० २२। (ढ) सू० ४८, ऋ० ६, ८। (ण) सू० ४८, ऋ० ७, १२। (त) सू० ४९, ऋ० १५। (थ) सू० ४९, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, १३, १४। (द) सू० ५१, ऋ० १३, १४, १५। (ध) सू० ५२, ऋ० ७, ८, ९, १०, ११, १२। (न) सू० ५३, ५४, ५५, ५६, ५७। (प) सू० ५२, ऋ० १४। (फ) सू० ५८, ऋ० २। (ब) सू० ५६, ऋ० ६। (भ) सू० ५१, ऋ० १६। (म) सू० ५७, ऋ० ८।

वार्हतं दशमं[क] तस्य चतस्रोऽन्या अनुष्टुभः[ख] ।
त्रिष्टु[ग]ब्बृहत्य[घ]नुष्टुप्[ङ] च परस्य तृच उत्तमः ॥२०॥
गायत्रस्य ततोऽन्यास्तु त्रिष्टुभस्तिस्र[च] आदितः ।
गायत्रमुत्तमं[छ] सूक्तं त्रिष्टुभ[ज]श्चोत्तमा त्रिचत् ॥२१॥
जगत्यः प्रथमास्तिस्र[झ]स्तथा चान्या चयोदशी[ञ] ।
षष्ठस्य त्वनुवाकस्य पञ्च त्रिष्टुभ[1] उत्तमाः[ट] ॥२२॥
उद्धृत्याशिरिवे[ठ]ष्येकाष्टचौ च द्वे उपोत्तमे ।
सप्तमस्य तु सूक्तस्य जगत्यौ द्वे उपोत्तमे[ड] ॥२३॥
नवमं[ढ] जागतं सूक्तं दशमे[ण]चादितस्तृचः ।
उत्तमस्य जगत्यौ तु षष्ठी[त] च दशमी[थ] च या ॥२४॥
एका सप्तदशी[द] पङ्क्तिः संबाधते[ध]ति प्रकरी ।

इति षष्ठं मण्डलम् ॥

---

(१) अनुष्टुभ इति अ-पुस्तके पठ्यते ।

(क) सू० ५९ । (ख) सू० ५९, ऋ० ७, ८, ९, १० । (ग) सू० ६०, ऋ० १३ । (घ) सू० ६०, ऋ० १४ । (ङ) सू० ६०, ऋ० १५ । (च) सू० ६०, ऋ० १, २, ३ । (छ) सू० ६१ । (ज) सू० ६१, ऋ० १४ । (झ) सू० ६२, ऋ० १, २, ३ । (ञ) सू० ६१, ऋ० १३ । (ट) सू० ६३, ६४, ६५, ६६, ६७ । (ठ) सू० ७५, ऋ० १४, १५, १६ । (ड) सू० ६८, ऋ० १०, ११ । (ढ) सू० ७० । (ण) सू० ७१, ऋ० १, २, ३ । (त) सू० ७५, ऋ० ६ । (थ) सू० ७५, ऋ० १० । (द) सू० ७५, ऋ० १७ । (ध) सू० ६६, ऋ० १० ।

# अथ सप्तमं मण्डलम् ।

त्रैष्टुभे तु वसिष्ठस्य विराजोऽष्टादशा(क)दितः ।
प्रथमस्यानुवाकस्य द्वैपदं सूक्तमुत्तमम्(ख) ॥१॥
चतुर्दशं छष्टत्यादि(ग) तस्माद्गायत्रमुत्तरम्(घ) ।
प्रगाथं बार्हतं सूक्तं द्वादशर्चमुपोत्तमम्(ङ) ॥२॥
द्वितीयस्यानुवाकस्य तेषु तेषामुपोत्तमम्(च) ।
प्रगाथमेषामुद्धृत्य द्वितीया द्विपदास्त्वथ(छ) ॥३॥
वैराजं पञ्चमं(ज) सूक्तं त्रिष्टुबस्योत्तमा(झ) निचृत् ।
गायत्रं(ञ) त्रिविराडन्तं(ट) द्वादशर्चं चतुर्दशम् ॥४॥
तृतीयस्यानुवाकस्य चतस्रोऽ(ठ)न्त्या अनुष्टुभः ।
उत्तमस्य तु सूक्तस्य गायत्री प्रथमा(ड) पुनः ॥५॥
उपरिष्टाद्बृहत्यन्तु तिस्रो(ढ) मध्यगता ऋचः ।
आद्रावाद्यस्य सूक्तस्य द्विपदा एकविंशतिः(ण) ॥६॥

---

(क) सू० १, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६, १७, १८। (ख) सू० १७। (ग) सू० १४, ऋ० १। (घ) सू० १५। (ङ) सू० १६। (च) सू० ३२। (छ) सू० ३२, ऋ० ३। (ज) सू० ३३। (झ) सू० ३४, ऋ० ९। (ञ) सू० ३१। (ट) सू० ३१, ऋ० १०, ११, १२। (ठ) सू० ५५, ऋ० ५, ६, ७, ८। (ड) सू० ५५, ऋ० १। (ढ) सू० ५५, ऋ० २, ३, ४। (ण) सू० ३४, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६, १७, १८, १९, २०, २१।

अष्टमस्य जगत्याद्या(ङ) सूक्तस्यैकादशस्य(च) च ।
त्रयोदश जागतं तु सूक्तं सप्तदश(छ) च यत् ॥७॥
तयोः पूर्वे(ज) त्रिष्टुबन्तं सूक्तस्यान्त्यमथोत्तरम्(झ) ।
चतुर्थस्यानुवाकस्य प्रगाथा बार्हता(ञ)स्तथा ॥८॥
सूक्तस्यानुष्टुबन्त्यस्य(ट) चतुर्थस्यादितस्तु च ।
मारुतस्त्वेव गायत्रस्तृच सांतपना(ठ) इति ॥९॥
एकादश्या(ड)द्वौ सूक्तस्य द्विपदा प्रथमस्य तु ।
एकादशस्य तिस्रो(ढ)ऽन्त्या गायत्र्यो सप्त(ण)चादितः ॥१०॥
प्रगाथा बार्हताः शेषाः(त) पुरउष्णिक् षोडशी(थ) ।
त्रयोदश(द) तु वैराजस्त्रयावुद्धृत्य सूक्तगे(ध) ॥११॥
पञ्चमस्यानुवाकस्य गायत्रं सूक्तमुत्तमम्(न) ।
एकादशे(प) चतुर्थे(फ) च प्रगाथा बार्हतास्तृचा ॥१२॥
ऐन्द्रावरुणे द्वे सूक्ते(ब) दशार्वं जागते उभे ।

---

(ङ) सू० ३१, ऋ० १। (च) सू० ३३, ऋ० १। (छ) सू० ५०। (ज) सू० ३६। (झ) सू० ५०, ऋ० ६। (ञ) सू० ५८, ऋ० ३, ५। (ट) सू० ५८ ऋ० १२। (ठ) सू० ५८, ऋ० ८, १०, ११। (ड) सू० ५९, ऋ० १, २ ३ ४ ५, ६ ७ ८, ९, १०, ११। (ढ) सू० ६६, ऋ० १७, १८, १९। (ण) सू० ६६, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९। (त) सू० ६६, ऋ० १० ११, १२, १३, १४ १५। (थ) सू० ६६, ऋ० १६। (द) सू० ६८, ऋ० १, २, ३, ४, ५, ६, ७। (ध) सू० ६८, ऋ० ८, ९। (न) सू० ७९। (प) सू० ८१, ऋ० १, २ ३। (फ) सू० ७४ ऋ० १, २, ३। (ब) सू० ८२, ८३।

उत्तमस्य तु सूक्तस्य द्वगमी निचृदुत्तमा(क) ॥१३॥
षष्ठस्य त्वनुवाकस्य प्रगाथो बार्हतो(ख)द्वृचः ।
एका(ग)प्रस्तारपङ्क्तिस्तु सप्तमस्यादितस्तृचः ॥१४॥
गायत्र्य उत्तरास्तिस्रः(घ) पार्जन्यं च त्रयोदशम्(ङ) ।
पञ्चमं(च) चोत्तमामेका(छ)मुद्धृत्यर्चमनुष्टुभम् ॥१५॥
उत्तमस्योत्तमा(ज)नुष्टुब्जगत्यष्टादशी(झ)निचृत् ।
एकविंशीत्रयोविंश्यौ(ञ) तयोभे सप्त(ट)चादितः ॥१६॥
उपोत्तमा तु सूक्तस्य प्रथमैका(ठ)स्त्वनुष्टुबुक् ॥

इति सप्तमं मण्डलम् ॥

---

(क) सू० ८८, ऋ० ६ । (ख) सू० ९६, ऋ० १, २ । (ग) सू० ९६, ऋ० ३ । (घ) सू० ९६, ऋ० ४, ५, ६ । (ङ) सू० १०२ । (च) सू० ९४ । (छ) सू० ९४, ऋ० १२ । (ज) सू० १०४, ऋ० १४ । (झ) सू० १०४, ऋ० १८ । (ञ) सू० १०४, ऋ० २१, २२ । (ट) सू० १०४, ऋ० १, २, ३, ४, ५, ६, ७ । (ठ) सू० १०३, ऋ० १ ।

# अथाष्टमं मण्डलम् ।

प्रथमस्यानुवाकस्य गायत्रे मण्डलेऽष्टमे ।
द्वित्रिष्टुबन्तं[क] प्रथम द्विप्रगाथादि[ख] वार्हतम् ॥१॥
तृतीये[ग] च चतुर्थे[घ] च प्रगाथा वार्हता स्मृताः ।
तृतीयस्य बृहत्यन्त्या[ङ] गायत्र्यौ द्वे उपोत्तमे[च] ॥२॥
पुरउष्णिक् चतुर्थस्य सूक्तस्यैकोत्तमा[छ]निचृत् ।
पञ्चमस्य तु सूक्तस्य बृहत्यौ द्वे उपोत्तमे[ज] ॥३॥
य मे दु.[झ]स्याद्व. सोमा[ञ] माकिरेने[ट]त्यनुष्टुभ ।
तृतीयस्य[ठ] चतुर्थस्य[ड] सूक्ते आनुष्टुभे उभे ॥४॥
द्वितीयस्यानुवाकस्य तत्र काश्चिदृचोऽन्यथा ।
चतुर्थे सूक्ते प्रथमा[ढ] षष्ठी[ण] पञ्चदशी[त] च या ॥५॥
चतुर्दशी[थ] चतुर्थी[द] च बृहत्य पञ्चमी[ध]ककुप् ।
त्रिष्टु[न]ब्विराड्[प] जगत्ये[फ]व दशमीप्रभृतिस्तु च ॥६॥

---

(क) सू० १, ऋ० ३३, ३४ । (ख) सू० १, ऋ० १, २ । (ग) सू० १ ऋ० ३ । (घ) सू० १, ऋ० ४ । (ङ) सू० ३, ऋ० २४ । (च) सू० ३ ऋ० २२, २३ । (छ) सू० ४, ऋ० २१ । (ज) सू० ५, ऋ० ३७, ३८ । (झ) सू० ३, ऋ० २१ । (ञ) सू० २, ऋ० २८ । (ट) सू० ५, ऋ० ३९ । (ठ) सू० ८ । (ड) सू० ९, ऋ० १ । (ढ) सू० ९ । (ण) सू० ९, ऋ० ५ । (त) ९, ऋ० १५ । (थ) सू० ९, ऋ० १४ । (द) सू० ९, ४ । (ध) सू० ९, ऋ० ५ । (न) सू० ९, ऋ० १० । (प) सू० ९, ऋ० ११ । (फ) सू० ९, ऋ० १२ ।

गायत्रौ परिशिष्टानां द्वितीयान्त्यौ[क] तृचावुभौ ।
पञ्चमस्य[ख] बृहत्याभ्यां मध्येज्योति[ग]रनुष्टुबृक्[घ] ॥७॥
आस्तारपङ्क्ति[ङ]र्बार्हतः[च] प्रगाथश्चैवमृग्विधिः ।
षष्ठस्य तूत्तमा[छ] त्रिष्टुप्प्रतिष्ठा प्रथमा[ज]निचृत् ॥८॥
द्वितीया[झ]वर्धमाना तु सूक्तमुत्तर[ञ]मौष्णिहम् ।
प्रथमश्च[ट] तृतीयश्च[ठ] षष्ठ[ड]श्चौष्णिहमेव हि ॥९॥
तृतीयस्यानुवाकस्य प्रगाथे काकुभे उभे ।
उत्तमोपोत्तमे[ढ] सूक्ते तत्र काश्चिदृचोऽन्यथा ॥१०॥
उपोत्तमे सप्तविंशी[ण] द्विपदैकोत्तमास्त्विमाः ।
उष्णि[त]क्सतोबृहत्यौ[थ] च ककु[द]प्पङ्क्ति[ध]श्च ता ऋचः ॥११॥
वास्तोष्पते ध्रुवे[न]त्येष प्रगाथो बार्हतो तृचः ।
चतुर्थस्यानुवाकस्य प्रगाथाः काकुभा नव[प] ॥१२॥
आद्ये सूक्ते द्वितीये तु वक्ष्यते विधिराश्विने ।
त्रयः[फ] प्रगाथा बार्हताः प्रगाथाः काकुभास्त्रयः[ब] ॥१३॥

---

(क) सू० ९, ऋ० २, २१ । (ख) सू० १०, ऋ० १, ५ । (ग) सू० १०, ऋ० २ । (घ) सू० १० ऋ० ३ । (ङ) सू० १० ऋ० ४ । (च) सू० १० ऋ० ६ । (छ) सू० ११, ऋ० १० । (ज) सू० ११, १ । (झ) सू० ११ ऋ० २ । (ञ) सू० १२ । (ट) सू० १३ । (ठ) सू० १४ । (ड) सू० १८ । (ढ) सू० १९, २० । (ण) सू० १९, ऋ० २७ । (त) सू० १९, ऋ० ३४ । (थ) सू० १९, ऋ० ३५ । (द) सू० १९, ३६ । (ध) सू० १९, ३७ । (न) सू० १७, ऋ० १४, १५ । (प) सू० २१, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९ । (फ) सू० २२, ऋ० १, ३, ५ । (ब) सू० २२, ऋ० १३ १५, १६ ।

